# पुराणविमर्शः

लेखकः
**प्रो० रामप्रतापः वेदालङ्कारः**
पूर्वाचार्यो विभागाध्यक्षश्च
जम्मूविश्वविद्यालयः, जम्मू तवी



विश्वेश्वरानन्द-वैदिक-शोध-संस्थानम्
साधु-आश्रमः, होशियारपुरम् - १४६०२१ (पंजाब)
२००४

# पुराणविमर्शः


रामप्रतापः वेदालङ्.कारः
पूर्वाचार्यो विभागाध्यक्षश्च
जम्मूविश्वविद्यालयः, जम्मू तवी






विश्वेश्वरानन्द वैदिक शोध संस्थानम्
साधु आश्रमः
होशियारपुरम्

# पुरोवाक्

आवैदिककालादेव पुराणशब्दोऽयं धार्मिकसाहित्यार्थे प्रचलितोऽवर्तत । परं महाभारतमिव पुराणसाहित्य–मप्युत्तरोत्तरं विकासं भजत् तथा ख्यातिमगात् यथा न तन्निभं महत् साहित्यमिदानीमायात्यापाततः दृष्टिपथम् । कर्ता चास्य व्यासो व्यपदिश्यते विद्वद्भिः । अथर्ववेदानुसारेण पुराणस्याविर्भावोऽपि ऋक्–साम–च्छन्दोयजुर्भिः सहैव जातः "ऋचः सामानि छन्दांसि पुराणं यजुषा सह" इति वचनात् । छान्दोग्योपनिषदि 'इतिहास–पुराणं पञ्चमं वेदम्' इत्येवं प्रतिपादयन् नारदः पुराणं पञ्चमं वेदममन्यत । महाभारतेऽपि 'इतिहास–पुराणाभ्यां वेदार्थमुपबृंहयेत्" इति प्रतिपादयता व्यासेनास्य महत्त्वममानि । किमस्ति पुराणवाङ्मयस्य महत्त्वमिति पुराणविमर्शे विशेषेण विस्तरशो व्याख्यायि व्याख्यात्रा विद्वद्वरेण प्रो. रामप्रतापवेदालङ्कारेण ।

वस्तुतः पुराणसाहित्यमवलोक्यासंशयमालेखितुं शक्यते यत्पुराणसाहित्यमिदं सर्वस्यैव संस्कृतवाङ्मयस्य विश्वकोशः । यथा पुराणविमर्शाख्येऽस्मिन् ग्रन्थे व्यलेखि लेखकेन तथा चेदमारव्यातुं शक्यते यद् आयुर्वेद–व्याकरण–संगीत–ज्योतिषादिविषये विशिष्टमिदं पुराण–साहित्यं तथा वैशिष्ट्यमध्यगच्छत् यथा चास्य महत्त्वं प्रतिपादयितुमनीशः मुनीशोऽपि । न केवलं साहित्यिक–महत्त्वेनैव साहित्यस्यास्य महनीयत्वमपित्वैतिहासिक–शैक्षिक–नैतिक–भौगोलिक–सामाजिक–दार्शनिकदृष्ट्याऽप्य–स्य गणना तथा विधीयते विद्वद्भिर्यथा न शास्त्रान्तरस्य ।

वस्तुतः अनेनैव साहित्येन भारतमेकतासूत्रेण निबद्धमिति निर्व्याजं वक्तुं शक्यते ।

विदुषा लेखकेन सर्वेषां विषयाणां वैदुष्यपूर्वकं साङ्गोपाङ्गं विवेचनमकारि ग्रन्थेऽस्मिन्निति प्रतिपादनस्याऽनावश्यकम् 'नहि कस्तूरिकामोदः शपथेन विभाव्यते' इतिवत् पाठं पाठं पाठकाः स्वयमेवागमिष्यन्ति ।

सम्प्रति ग्रन्थस्यौपयिकत्वं महत्त्वं सर्वविधं नूतनत्वमवगणय्य ग्रन्थस्यास्य प्रकाशनं विधीयते संस्थानेन। पठकानां पाठकामान्च कृते महदुपयोगी भविष्यति ग्रन्थोऽयमित्यत्र नास्ति शंका–पङ्क–कलङ्कावसरः । सुधीः साहित्यकारः भविष्ये विषयान्तराण्यप्यधिकृत्य साहित्यं रचयन् ख्यातिं गमिष्यतीति कामयमानः——

विदुषां वशंवदः
इन्द्रदत्त उनियालः
संचालकः
विश्वेश्वरानन्द वैदिक शोधसंस्थानम्
होशियारपुरम्
२५/३/२००४

# आमुखम्

पुराणेषु लौकिकालौकिकसर्वविधविषयाः सङ्कलिताः प्रतिपादिता आलोचिताश्च । अस्मादेवैतानि पुराणानि विश्वकोशसञ्ज्ञामवाप्नुवन् । विविधविद्यानां परिज्ञानायैतेषा-मध्ययनमनुशीलनञ्च परमावश्यकं परमञ्चोपयोगि इति विषये नास्ति काऽपि विप्रतिपत्तिः । अनेकैर्भारतीयैरितरैश्च पाश्चात्यैर्विद्वद्भिः पुराणानामनुशीलनं विविधाभिर्दृष्टिभि र्व्यधायि । कैश्चिदेषां सांस्कृतिकं कैश्चिद् भाषाविषयकम् अन्यैर्धार्मिकम् अपरैश्च दार्शनिकादिकमध्ययनं प्रस्तुतम् । विपुलं खलु पुराणवाङ्मयं विपुला चास्त्यत्र वर्णिता विषयसामग्री । सर्वं ज्ञातुं प्रवक्तुञ्च ब्रह्मणाऽपि न शक्यते--इत्युक्तिं मनसि निधाय पुराणानां रचनाकालम्, एतेषां विभिन्नसंस्करणान्यनुक्रमविकासम्, एषां रचयितारम्, तथात्र प्रतिपादितान् व्याकरणकाव्यशास्त्राणाञ्च कतिपयविषयानवलम्ब्यैवात्र सङ्क्षेपेण व्यचारयमहम्। एतदर्थं मया कतिपयान्येव पुराणान्यत्रालोचितानि तेषां नामान्यपि तेषु तेषु सन्दर्भविशेषेषु समाख्यातानि ।

सर्वप्रथममहमस्य ग्रन्थस्य प्रकाशकेभ्यो विश्वेश्वरानन्द–वैदिकशोध–संस्थान–सञ्चालकेभ्यः प्रो. इन्द्रदत्तउनियालमहाभागेभ्यो धन्यवादानर्पयामि यैरेषा रचना प्रकाशिता । अपि च दिल्ली–संस्कृत–अकादमी दिल्लीशासनसचिवाः डा. श्रीकृष्णसेमवालमहोदया अपि आर्थिकसहायताप्रदानार्थं मदीयं हार्दिकं धन्यवादं गृह्णन्तु । समुचितपरामर्शप्रदात्रीं प्रो. वेदकुमारीं, मुद्रणकार्यसहायकं डा. देवराजशर्माणं प्रत्यपि स्वीयां हार्दिकीं कृतज्ञतां ज्ञापयामि ।

जम्मू तवी
25--3--2004

रामप्रतापो वेदालङ्कारः

# विषयानुक्रमणिका

# पुराणानां लक्षणं महत्त्वं रचनाकालश्च

पुराणानां लक्षणम्

हलायुधकोशे पुराणशब्दस्य – पुरा पूर्वस्मिन् काले भव इति व्युत्पत्तिनिमित्तोऽर्थो विहितः ।[1] वायुपुराणेऽपि प्रकारान्तरेणायमेवार्थः प्रदर्शितः । तत्रेदमुक्तम् –

यस्मात्पुरा ह्यनितीदं पुराणं तेन तत्स्मृतम् ।[2]

अस्यां व्युत्पत्तौ यत्किमपि वस्तु पुरातनकालादेवानिति (प्राणिति) तत्पुराणमिति नाम लभते । अस्य प्रवृत्तिनिमित्तोऽर्थः पञ्चलक्षणात्मकं दशलक्षणात्मकं वा ग्रन्थं निर्दिशति ।[3] अग्न्यादि–पुराणपरोऽयं शब्दो नपुंसके प्रयुज्यते। इदं पुराणम् (पुरा+नवम्) पुरातनं सदपि नवं विद्यते यतो हि शास्त्रमेतदेकतः पुरातनघटनानां वर्णनं विधत्ते, अपरतः वर्तमानां भविष्यन्तीं च घटनामपि वर्णयति । इतिहासे तावत्प्राचीनानां घटनानां सङ्कलनं विधीयते ।

पुराणानां महत्त्वम् – प्राचीनकालादारभ्य इदानीं यावत् सहस्रेषु वर्षेषु संस्कृतसाहित्यमन्दाकिनी कदाचित्क्वचित्त्वरितगत्या कदाचित्क्वचिच्च मन्दरूपेण प्रवहमाना सती दरीदृश्यते । अस्यां हि ऋग्वेदादयो वेदा निरुक्तादीनि वेदाङ्गानि, ईशादय उपनिषदः, साङ्ख्यादीनि दर्शनानि,

---

1 पुराणः.......(पुरा पूर्वस्मिन् काले भव इति । पुरा + सायंचिरं प्राह्णे प्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च इति ट्युनिपातनात् तुडभावः) हलायुधकोशः पृ. 438

2 वायु.पु. 1,183 खेमराजः श्रीकृष्णदासः लक्ष्मीवेङ्कटेश्वर प्रेस, बम्बई 1933 तमः क्रैस्ताब्दः ।

3. (1)(कः) सर्गस्य प्रतिसर्गस्य वंशमन्वन्तरस्य च ।
वंशानुचरितादेश्च मत्स्यकूर्मादिरूपधृक् ।। अग्नि.पु. 1,14
(खः)सर्गश्च प्रतिसर्गश्च वंशमन्वन्तराणि च ।
सर्वेष्वेतेषु कथ्यन्ते वंशानुचरितं च यत् ।। विष्णु.पु. 3,6,25
(गः)सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
वंशानुचरितं चैव पुराणं पञ्च लक्षणम् ।।
मार्कण्डेयपु. 134,13

(2) सर्गोऽस्याथ विसर्गश्च वृत्ती रक्षान्तराणि च ।
वंशो वंशानुचरितं संस्था हेतुरपाश्रयः ।
दशभिर्लक्षणैर्युक्तं पुराणं तद्विदो विदुः । भागवतपु. 12,7,8–9

रामायणमहाभारतादीनि ऐतिहासिककाव्यानि, महाकविकालिदासादि–विरचितानि काव्यनाटकानि प्रचुरमात्रायामुपलभ्यन्ते । अस्मिन् सम्पूर्णसंस्कृतवाङ्मये पुराणसाहित्यस्यापि स्थानवैशिष्ट्यं विद्यते । एषु हि पुराणेषु लौकिकालौकिकविविधविद्यानां सङ्ग्रहो विहितो येनैतेषां स्वरूपं विश्वकोशरूपात्मकं जातम् । एतेषामध्ययनेन मनुष्यः सर्वविज् जायते यथोक्तमग्निपुराणे –

विद्यासारं यद् विदित्वा सर्वज्ञो जायते नरः ।[4]

एवमेव पुराणज्ञानं विना कोऽपि जनो विचक्षणो न भवेत् –

यो विद्याच्चतुरो वेदान् साङ्गोपनिषदो द्विजः ।
न चेत्पुराणं संविद्यान्नैव स स्याद् विचक्षणः ।।[5]

एषु पुराणेषु खलु सर्वशास्त्राणां समावेशः सन्दृश्यते –
पुराणमखिलं तात सर्वशास्त्रमयं स्मृतम् ।[6]

अश्रुतपुराणः पुमान् वेदान् शास्त्राण्यप्यधीत्य सम्यग् ज्ञानं प्राप्तुं न क्षमते ।[7] काव्यशास्त्रदृष्ट्या विष्णुभागवतादिपुराणानामतीव महत्त्वं विद्यते । विष्णुपुराणे ओं नमो भगवते वासुदेवायेति द्वादशाक्षरमन्त्रस्य माहात्म्यं निरूपयन् पराशर एवं कथयति –

गत्वा गत्वा निवर्तन्ते चन्द्रसूर्यादयो ग्रहाः ।
अद्यापि न निवर्तन्ते द्वादशाक्षरचिन्तकाः ।।[8]

अत्र चन्द्रसूर्याद्युपमानेभ्यो द्वादशाक्षरचिन्तकोपमेयानाम–निवर्तनरूपोत्कर्षसंसूचनाद् व्यतिरेको ऽलङ्कारो विद्यते ।

---

4 अग्निपुराणम् 1,12

5 वायुपुराणम् 1,200

6 स्कन्दपुराणम् 7,1,24

7 बहुशास्त्रं समभ्यस्य बहून् वेदान् सविस्तरम् ।
पुंसोऽश्रुतपुराणस्य न सम्यग् याति दर्शनम् ।।
पद्मपुराणम् 4,105,13

8 विष्णुपुराणम् 1,6,40

भागवतपुराणस्य मङ्गलाचरणश्लोके रूपकालङ्कारजनितं प्रचुरं काव्यसौन्दर्यं संलक्ष्यते –

निगमकल्पतरोर्गलितं फलं
शुकमुखादमृतद्रवसंयुतम् ।
पिबत भागवतं रसमालयं
मुहुरहो रसिका भुवि भावुकाः ।।[9]

अत्रोपमानभूतयोर्निगमकल्पतरुशब्दयोस्तादूरूप्यसम्बन्धः । शुकमुखादिपदे च श्लेषत्वादयमर्थः—शुकदेवरूपिणः शुकस्य मुखात् । अत्राप्युपमानोपमेयभूतयोः शुकशुकदेवयोस्तादूरूप्यम् । अस्मादत्र रूपकालङ्कारः ।

एवमेवास्मिन् पुराणे शृङ्गाररसस्य समासोक्त्याश्चेदं सुन्दरं निदर्शनं हृदयमावर्जयति । अत्र रासलीलाप्रसङ्गे शरन्निशायां चन्द्रोदयवर्णनं विहितम् –

तदोडुराजः ककुभः करैर्मुखं
प्राच्या विलिम्पन्नरुणेन शन्तमैः ।
स चर्षणीनामुदगाच्छुचो मृजन्
प्रियः प्रियाया इव दीर्घदर्शनः ।।[10]

अपि च पुराणेषु आध्यात्मिकाधिदैविकाधिभौतिकबौद्धिक–व्यावहारिकनैतिकसांस्कृतिकैतिहासिकविषयाणां विविधविद्यानाञ्चप्रति–पादनं विवेचनञ्च सूक्ष्मेक्षिकया सम्पाद्यते । अत्र विविधरूपाणां कथानां माध्यमेन सुहृत्सम्मितशैल्या उपदेशाः प्रदत्ताः । एभिः सदाचारं प्रति प्रवृत्तिर्दुराचाराच्च निवृत्तिर्जायते ।

पुराणानि सांसारिकत्रितापतप्तानां प्राणिनां प्रबोधमज्ञानान्धकारे निपतितानां प्रकाशं भ्रान्तानां सन्मार्गं निराशानामाशाज्योतिः शोक–सन्तप्तानामुल्लासमयं प्रसादं पथभ्रष्टानां कर्तव्यज्ञानं पापिनां

---

9 भागवतपुराणम् 1,1,3

10 तत्रैव 10,29,2

पापनाशनसाधनं नीतिविशारदानां नीतिनैपुण्यं निष्कर्मिणां साधनोपदेशं भक्तानां भक्तिभावं ज्ञानिनामलौकिकज्ञानस्य प्रकाशं च ददति । तात्पर्यमिदमस्ति यद् ये जिज्ञासवनो येनोद्देश्येन पुराणेषु सविश्वासं श्रद्दधति भक्तिभावेन च पुराणानां स्वाध्यायं कुर्वन्ति ते समुद्रादमूल्यं रत्नमिव एभ्य उभयलोककल्याणकारिणं बहुमूल्यं सदुपदेशं प्राप्य स्वं जीवनं सफलयितुं समर्था भवन्ति ।[11]

पुराणवाङ्मयं भारतीयजीवनसमुद्रस्यास्ति अमूल्यं रत्नं तथाऽतीतं वर्तमानेन सह संयोजयितुं स्वर्णमयी शृङ्खला विद्यते । विश्वसाहित्यस्याक्षयभण्डारे ऽष्टादश महापुराणानि अनुपमा दीप्रमणयः सन्ति । इमानि चास्माकं सामाजिकसांस्कृतिकराजनीतिकधार्मिक–दार्शनिकजीवनं स्वच्छदर्पणवत् प्रतिबिम्बितं कुर्वन्ति, सहैव सरलभाषया क्रमबद्धकथानकशैल्या च प्राचीनानि सन्त्यपि नवीनतमां स्फूर्तिं सन्चारयन्ति ।

वस्तुतः पुराणानां प्रकाशनं नराणां बुद्धिवृद्धिहेतवे सन्जातमिति महाभारतोक्तिर्युक्तियुक्ता सारगर्भिता प्रतीयते –

> पुराणपूर्णचन्द्रेण श्रुतिज्योत्स्नाः प्रकाशिताः ।
> नृबुद्धिकैरवाणान्च कृतमेतत् प्रकाशितम् ।।[12]

3. पुराणानां रचनाकालः

पुराणानां रचनाकालविषये विदुषां मध्ये विसंवादो दृश्यते । वस्तुतः सर्वप्रथमं कतमत्पुराणं केन व्यरचीतिविषये न किमपि सुनिश्चितं वक्तुं पार्यते । सम्प्रति यान्यष्टादशपुराणानि प्राप्यन्ते तेषां भाषां विषयांश्चाधीत्य कैश्चित् पाश्चात्यैर्भारतीयैश्चानेकैर्विद्वद्भिस्तेषां समयनिर्धारणं कृतम् । प्रो. शिवदत्तज्ञानिना तेषां मतानि संकेतपुरस्सरमेवं प्रस्तुतानि ।[13]

---

11 पुराणपर्यालोचनम्, श्रीकृष्णमणित्रिपाठिकृतम् चौखम्बा सुरभारती प्रकाशनम् प्रथमपरिच्छेदे पृष्ठसङ्ख्या 20

12 महाभारतम्1,1,86

13 Purana, V.S.Agrawal (The Date of the Puranas - S.D. Gyani) Vasanta Panchami Number Vol.I, No.2; pp.213-216.

पुराणेषु विद्यमानां साम्प्रदायिकीं धार्मिकीं च सामग्रीं निरीक्ष्य कैश्चित् प्राक्तनैर्विपश्चिद्भिरेषां समयो भूयानुत्तरवर्ती प्रोक्तः। बोप–देवाख्येन वैयाकरणेन भागवतं निरमायीति श्रुतिपरम्परामनुरुन्धता कोलब्रुकमहोदयेनास्य पुराणस्य समयस्त्रयोदशतमे क्रैस्तशतके मतः।[14] भागवतपुराणमिव पुराणान्तराण्यपि समकालिकत्वादर्वाक्तमानीति वान्सवैनेडीमहोदयमतम् ।[15] तस्यायं तर्को यत् पुराणान्यष्टादशेति चिरकालात् प्रसिद्धिः । भागवतादिषु बहुषु पुराणेष्वष्टादशपुराणानां नामानि दृश्यन्ते । एवमेकस्मिन् पुराणे पुराणान्तराणां नामग्रहणेनैतेषां समसामयिकत्वं स्फुटं प्रतीयते । पुराणानि विभिन्नेषु कालेषु नानाविधासु च परिस्थितिषु निरमीयन्तेति विलसनमहाभागेन प्रोक्तम्।[16] एतेषां पुराणानां धार्मिकस्थलानि हिन्दुधर्मेण प्रभावितानि । इमानि खलु क्रिस्तस्याष्टमाद्वा नवमाद्वा शतकात् पूर्वतराणि न प्रतीयन्ते । एतेषामन्तिमानि संस्करणानि क्रैस्तद्वादशतमाच्छतकादारभ्य षोडशतमं क्रैस्तशतकं यावद् व्यरच्यन्त । विष्णुपुराणस्य च समयः 1045 क्रैस्ताब्दः । एवं विलसनमहोदयेन पुराणानां समयो भूयानर्वाचीनो मतः। परमेतन्मतमन्यत्र प्राप्तैस्तथ्यैः सह न संगच्छच्ते । 1030 तमे क्रैस्ताब्दे भारतमुपागतेनालबेरुनीसंज्ञेन[17] यात्रिणा स्वीये लेखे ऽष्टादशपुराणानां यादृशी सूची प्रदर्शिता तादृशी विष्णुपुराणे ऽप्युपलभ्यते। अनेन विष्णुपुराणस्य 1030 तमात् क्रैस्ताब्दात् पूर्ववर्तित्वं प्रतीयते । प्रायः 620 क्रैस्ताब्दवर्तिनि हर्षचरिते[18] बाणः पवनप्रोक्तमेकं पुराणं निर्दिदेश । डा0 फूहररमतानुसारं बाणो वायुपुराणवदग्नि–मार्कण्डेयभागवतपुराणान्यप्युपयुयुजे।[19] गुप्तलिपिनिबद्धस्य स्कन्द–पुराणस्य बंगदेशीयहस्तलिखितग्रन्थावलोकनेन तत्पुराणं सप्तमे क्रैस्तशतके विद्यमानमासीदिति ज्ञायते ।[20] मिलिन्दपन्ह इत्याख्ये 300

---

[14] AsiaticResearches, Vol.VIII, p.467; Miscellaneous Essays, Vol. 1, p.104.

[15] Col. VansVennedy : Researches into the nature and Affinity of Ancient and Hindu mythology, p.153.

[16] Viṣṇu Purana Vol.I, Preface, p.XVI.

[17] Sachaus Translation, Vol. I, pp.130, 131, 264.

[18] Cowell and Thomas : Transaction, p.72.

[19] Transactions of the VIth Oriental Congress, Vol.III, p.205.

[20] Journal of the Royal Asiatic Society (London) 1903, p.193.

क्रैस्ताब्दात्पूर्वतरे ग्रन्थेऽपि कतिपयस्थलविशेषाणां निर्देशः ।[21] बुह्लरेण पुराणानां विषये बहून्युद्धरणानि पुराणेभ्योऽन्येभ्यो ग्रन्थेभ्यश्च बहवः संकेताः संकलिताः । वायुविष्णुमत्स्यब्रह्माण्डपुराणेषूपलभ्यमानं भविष्यत्कालवर्तिनृपाणां विवरणं गुप्तराज्यस्य तदानींतनानामुत वा अन्येषां नृपाणां निर्देशं विधाय विरमतीति तेन प्रदर्शितम् । एवं प्रत्नतरपुराणानि गुप्तवंशोद्भवानां नृपाणां काले सम्पादितानीति सम्भाव्यते ।[22] वायुमत्स्यब्रह्माण्डपुराणेषु वर्तमानो भविष्यशब्दो न केवलं भविष्यकालार्थको ऽपितु तेन भविष्यपुराणस्यापि ग्रहणमिति पार्जिटरमतम् । कीथमहोदयस्तु सर्वत्रैष शब्दो भविष्यत्कालार्थे प्रयुक्त इति मनुते ।[23] पार्जिटरमतेनादिमोत्सीभूताद् भविष्यपुराणस्याद्य–संस्करणाद् वायुमत्स्यब्रह्माण्डपुराणानि स्वकीयं वंशावलीभागं जग्रहुः। अनन्तरं च विष्णुभागवतपुराणेऽपि भविष्यपुराणस्यैव वंशवलीमाश्रित्य विष्णुभागवतपुराणयोः बृहती वंशावली प्रस्तुता।[24] वायुमत्स्यब्रह्माण्डविष्णुभागवतपुराणेषु दृश्यमानाया ऐतिहासिक–सामग्र्याः समयं निर्धारयता पार्जिटरमहाभागेनैषां कालः क्रैस्ताब्दस्य द्वितीयशतकसमाप्तिकल्पत्वेन नियतः ।[25] तस्मिन् काले यज्ञश्रीनामाऽऽन्ध्रवंशोत्पन्नो राजा शशास । आदिमस्य भविष्यपुराणस्य प्रथमं संस्करणं 260 तमे क्रैस्ताब्दे समपाद्यत । सपद्येव च तस्मान्मत्स्यपुराणेन सामग्री सङ्कलिता । मत्स्यपुराणे गुप्तनृपाणामप्युदयकालं (335 तमं क्रैस्ताब्दं) यावदेतद्वंशावलीविवरणं परिबृंहितमुपलभ्यते । वायुब्रह्माण्डविष्णुभागवतपुराणेष्वपि विवरणमिदमेतावदेव । एषां च समयः 335 क्रैस्ताब्दः ।[26] 'एस.एम. एड्वर्ड्स' महोदयः कौटिल्यार्थशास्त्रे पुराणशब्दसङ्कीर्तनं विलोक्य तस्मिन् समये (क्रिस्तात्पूर्वं चतुर्थे शतके) पुराणग्रन्था आसन्निति विश्वसिति ।[27] मेगास्थनीज़ाभिधो यात्री पुराणेषु प्रतिपादितं

---

21 Sacred Books of the EastSeries,Vol. XXXV, pp. 6, 247.

22 Indian Antiquary Vol. XXV, p. 323, (1896)

23 Journal of the Royal Asiatic Society, London, pp. 1021-31.

24 Pargiter : Dynasties of the Kali Age, Introduction, pp.VII-IX.

25 Ibid, pp. XII, XIII; V.A. Smith : Early History of India (Fourth Edition) p.24.

26 Pargiter : Dynasties of the Kali Age, Introduction, p.XII.

27 V.A. Smith : Early Historyof India (4th Edition), p.24.

सृष्टिविद्याया ज्ञानं स्वर्गपातालादिलोकवर्णनं चावेदीत् । एतदाश्रित्य जैकसनमहाभागेन क्रिस्तपूर्वस्य चतुर्थशतकस्यान्तिमाच्चरणान्मेगास्थनीज़कालात् पूर्वं तेषां समयोऽङ्गीकृतः ।[28] मैकडोनलमहानुभाव इमानि पुराणानि महाभारतमनुस्मृतिकालीनानि किं वा आभ्यामपि पूर्वतराणीति मन्यते । तन्मतेन पुराणेषु वेदानां पुरातनीनां च स्मृतीनामनेकविषयाणां विकसितानि रूपाणि संलक्ष्यन्ते।[29] आर.सी. हाज़रामहोदयेन वायुमार्कण्डेयब्रह्माण्डविष्णुमत्स्यभागवतपुराणानां धर्मशास्त्रसम्बन्धिसामग्र्याः समयःक्रैस्ताब्दस्य तृतीयशतकादारभ्य सप्तमशतकपर्यन्तमङ्गीकृतः ।[30]

एवमेव प्रो. विण्टरनिट्ज़विपश्चिता मूलभूतानां पूर्वतरपुराणानां रचनासमयः क्रैस्ताब्दस्य सप्तमाच्छतकात् पूर्वमभूदिति प्रतिपादितम् । एतस्मात्कालादुत्तरवर्तिनां राज्ञां नामानि वंशावल्यो वा न पुराणेषु दृश्यन्ते इतिहासेषु च प्रसिद्धस्य हर्षाख्यभूपतेर्नामापि नात्र संख्यातमिति तेनोक्तम् ।[31]

अनेकेषां विदुषामुपर्युक्तानि मतानि निरीक्ष्य पुराणानां रचनाकालविषये न विदुषामैकमत्यमिति स्फुटं प्रतीयते । यद्यपि पुराणानां कोऽपि सुनिश्चितो रचनाकालो न निर्धारयितुं शक्यते तथापि वैदिके लौकिके चोभयविधे साहित्ये पुराणशब्दनिर्देशादस्य साहित्यस्य रचना पुरातनकालादारभ्यार्वाक्तनकालपर्यन्तं प्रावर्ततेति निश्चीयते । यदि पुराणसाहित्यमेतेषां ग्रन्थानां समयेषु नाभविष्यत् तर्हि पुराणशब्दस्यापि न तत्र निर्देशोऽलप्स्यत । सम्प्रति प्रो. शिवदत्तज्ञानिनो लेखमाश्रित्य येषु ग्रन्थेषु पुराणशब्दप्रयोगस्तेषां विवरणमत्र प्रस्तूयते ।[32]

---

(पुराणमितिवृत्तमाख्यायिकोदाहरणं धर्मशास्त्रमर्थशास्त्रं चेतिहासः कौ.अ.)

28 Bombay Branch of the Royal Asiatic Society, Centenary Memorial Volume, p.72.

29 A History of Sanskrit Literature, p.2.

30 Puranic Records on Hindu Rites and Customs, pp.174-177.

31 A History of Indian Literature, Vol.I, p.525.

32 Purana : V.S. Agrawal (The Date of thePuranas - S.D. Gyani) Vol.I,No.2,Feb. 1960; pp.217-219.

साहित्यविशेषार्थप्रतिपादकः पुराणशब्दोऽस्मिन्नेवार्थे सर्वप्रथम–मथर्ववेदे प्रयुक्त इति ज्ञायते । अत्र गाथेतिहासनाराशंसीभिः सहैव पुराणमपि गृहीतम् ।[33] अस्मिन्नेव वेदेऽन्यत्र ऋग्यजुस्सामभिः सहैव पुराणस्याप्युत्पत्तिर्जातेति प्रतिपादितम् ।[34] अनेन तदानीन्तने काले पुराणशब्देन व्यवह्रियमाणं किमपि लब्धस्वरूपं साहित्यं बभूवेति सुविशदमवभासते । गाथेतिहासनाराशंसीभिः सह प्रयुक्तत्वात् पुराण–साहित्यमपि विषयवस्तुदृष्ट्या तैः सदृशमभूदित्यप्यनुमातुं शक्यते । वेदानां समये त्वेतन्न वेदसंज्ञामवाप परं ब्राह्मणकाले वेदपदवीं जगाम।[35] बृहदारण्यकोपनिषदि परमपुरुषस्य वेदपुराणादीनि निश्वसितमिति निगदितम् ।[36] उपनिषत्काले नन्वेतत्साहित्यस्य महत्त्वं वेदानप्यतिशिश्ये ।[37] शाङ्खायनश्रौतसूत्रे पुराणं वेदत्वेन मतम् ।[38]

---

33 तमितिहासश्च पुराणं च गाथाश्च नाराशंसीश्चानुव्यचलन् ।।
इतिहासश्च वै स पुराणस्य च गाथानां च नाराशंसीनां च प्रियं धाम भवति य एवं वेद ।।

अथर्व. 15,6,11–12

34 ऋचः सामानि छन्दांसि पुराणं यजुषा सह ।
उच्छिष्टाज्जज्ञिरे सर्वे दिवि देवा दिवि श्रिताः ।।

अथर्व. 11,7,24

35 क) अध्वर्युस्तार्क्ष्ये वै पश्यतः पुराणं वेद सोऽयमिति किञ्चित्पुराणमाचक्षीत् ।

शतपथ. 13,4,3,13

ख) पञ्चवेदान्निरमिमीत सर्पवेदं पिशाचवेदमसुरवेदमितिहासवेदं पुराणवेदमिति........

गोपथ. 1,10

36 स यथा आर्द्रेधाग्नेरभ्याहितात् पृथग्धूमा विनिश्चरन्ति एवं वा अरेऽस्य महतोभूतस्य निश्वसितमेतद् यदृग्वेदो यजुर्वेदः सामवेदो ऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानानि अस्यैव एतानि सर्वाणि निश्वसितानि।

बृहदा. 24,10

37 स होवाच ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदम् ।

छान्दोग्य. 7,1,1

38 पुराणवेदो वेदः सोऽयमिति पुराणमाचक्षीत ।

शाङ्खायन.श्रौ.सू. 16,2,27

स्वकीयेऽर्थशास्त्रे कौटिल्येनापीतिहासो वेदाभिधया प्रोक्तः।[39] अस्मिन्नेवेतिहासवेदे पुराणस्यान्तर्भावो विधीयते ।[40] पुराणसाहित्यविषये रामायणेऽपि सङ्केतो दृश्यते ।[41] महाभारते पुराणशब्दप्रयोगस्तत्प्रति–पाद्यनिर्देशश्चोपलभ्येते ।[42] अस्मिन् हि वायुप्रोक्तस्यैकस्य पुराणस्यापि ग्रहणम् ।[43] ललिततविस्तरबौद्धग्रन्थः शैलीदृष्ट्या पुराणमेव । सप्तमे क्रैस्तशतके दिगम्बरजैनैः स्वमतप्रसाराय पुराणानि व्यरच्यन्त । अपि चैतत्साहित्यं दक्षिणभारतमपि प्राविशत् । विष्णुपुराणं तत्र कडवलुण्पुराणमिति नाम्ना प्रसिद्धम् ।[44]

अथर्ववेदस्य समयाद् (क्रिस्तात् पूर्वं द्वादशशतकात् क्रि.पू. दशमशतकपर्यन्तम्) आरभ्य सप्तमं क्रैस्तशतकं यावत् पुराणसाहित्यं नियतमेवावस्थितमासीदित्युपरिनिर्दिष्टेन विवेचनेन सम्यग् ज्ञायते । तस्यादिमं स्वरूपं कीदृशमासीदिति तु केवलमनुमानस्यैव विषयः। एव–मादिमपुराणस्य रचनाकालः क्रिस्ताद् द्वादशशतकपूर्वकल्पः प्रतीयते। सम्प्रत्युपलभ्यमानानां पुराणानां समयस्त्ववर्वाक्तन एव । विशेषतः पुराणानां राजवंशावलीसाम्प्रदायिकभागानां पार्जिटरादिभिर्विद्वद्भि–रनुमोदितः समयः समुचितः प्रतीयते । यदि अद्यतनकाले काचित्सामग्री कस्मिंश्चित्पुराणे संयुज्यते तर्हि तस्याः सामग्र्या समयो

---

39 सामर्ग्यजुर्वेदास्त्रयस्त्रयी। अथर्ववेदेतिहासवेदौ वेदाः ।
कौटि. अर्थ. 1,3,1–2

40 पुराणमितिवृत्तमाख्यायिकोदाहरणं धर्मशास्त्रमर्थशास्त्रं चेतीतिहासः ।
कौ.अ. 1.5.14

41 पुराणे सुमहत्कार्यं भविष्यति मया श्रुतम् ।
दृष्टं मे तपसा चैव श्रुत्वा च विदितं मम।
रामा. 4,62,3

42 पुराणमखिलं तात पिता तेऽधीतवान् पुरा ।
कच्चित्त्वमपि तत्सर्वमधीषे लोमहर्षणे ।।
पुराणे हि कथा दिव्या आदिवंशाश्च धीमताम् ।
कथ्यन्ते ताः पुराऽस्माभिः श्रुताः पूर्वं पितुस्तव ।।
महाभा. 1,5,1–2

43 एतत्ते सर्वमाख्यातमतीतानागतं तथा ।
वायुप्रोक्तमनुस्मृत्य पुराणमृषिसंस्तुतम् ।
महाभा. 3,191,16

44 V.R. Ram Chandra Dikshiter : Puranic Index, p.27

ऽद्यतनीयो भविष्यति । अत एव विषयसामग्रीसमयानुरोधेनैतत्पुराणस्य कालनिर्णयो विधेयः । कालनिर्धारणविषयको ऽयमेव निकषः समीचीनः प्रतीयते ।

परन्तु केचन आधुनिकाः समालोचका इतिहासकाराश्च पुराणानां विरचनं क्रैस्तप्रथमशतकेऽभवदित्यपि स्वीकर्तुं नोत्सहन्ते । कतिपयानां पुराणानां रचना अर्वाक्तने काले जाता अत एव तानि अर्वाचीनान्येवेति तेषां मतम् । वैदिककालत आरभ्य यवनमराठा–ऽऽङ्गलराज्यपर्यन्तं विविधानां घटनानां समुच्चयं पठित्वा तेषामिदं मतं दृढीभूतम् । वस्तुतः क्रैस्तप्रथमशतकादारभ्य इदानींपर्यन्तं पुराणेषु काले काले संशोधनं, परिवर्तनं परिवर्धनञ्च सञ्जातम् । अतएव एतेषां विषयनिरूपणे उत्तरोत्तरं विकासः संक्षेपः परिमार्जनञ्चजातम् । डा. के. एम. पणिक्करस्य लेखानुसारं महाभारतं पुराणानि च गुप्तकाले व्यरच्यन्त ।[45] वस्तुतः पुराणानां कालविषये इदं मतमेव समीचीनं प्रतीयते यदेषु कतिपयविषयाः सन्दर्भाश्च अतिप्राचीनाः केचन चातिनवीना विद्यन्ते । एकस्मिन् कालविशेषे न तानि लिखितानि उत वा तानि नैकस्य व्यक्तिविशेषस्य कृतयः सन्ति । वेदकालतो द्वादशशतकं यावत् सततं तेषां रचनासंङ्कलनं सम्पादनञ्चाजायतेति वाचस्पतिगौरेलाप्रभृतीनां मतं विद्यते ।[46] राखालदासबनर्जीमहोदयेन कथितं यद् गुप्तकालस्यानुकूलपरिस्थित्यां पुराणानां संस्करणानि जातानि ।[47] वायुविष्णुभविष्यभागवतपुराणेषु गुप्तवंशस्य पर्याप्त उल्लेखो दृश्यते अतएव एतेषां चतुर्णां संस्करणानि तदानीं सम्पादितानि इति वाचस्पतिगौरेलामतमस्ति ।[48]

वस्तुतः पुराणानां स्वरूपं विश्वकोशात्मकं वरीवर्ति । तेषु समये समये विविधा विद्याः समाविष्टा आसन् । तेषु या च सामग्री नूतनतमा तस्याः कालो ऽपि नूतनतमो मन्तव्यः ।

इदानीं प्रस्तुताध्ययनोपयोगिसप्तपुराणानां रचनाकालविषये सूक्ष्मेक्षिकया विचार्यते –

---

45 भारतीय इतिहास का सर्वेक्षण पृ. 53–54

46 संस्कृतसाहित्य का इतिहास, पृ.310

47 इम्पीरियल गुप्त, पृ.112

48 संस्कृत साहित्य का इतिहास, पृ.299

1. अग्निपुराणम् – अस्य पुराणस्य वर्तमानसंस्करणेषु 11457 श्लोका उपलभ्यन्ते ।

इतरपुराणानामिवास्य पुराणस्यापि रचनाकालविषयको मतभेदो दृश्यते । अस्य पुराणस्यापि विभिन्नभागानां रचना विभिन्नेषु कालेष्वजायत । अतएवेदानींतनस्याग्निपुराणस्य को भागः प्रत्नः कश्च नूतन इति निर्णेतुं दुष्करम् । तथापि बहुभिर्विद्वदभिरस्य पुराणस्य रचनाकालविषये स्वविचाराः प्रदर्शिताः ।

विलसनमहाभागेनास्य विविधविषयाणां रचना सङ्कलनं च विभिन्नेषु कालेष्वजायतेति मतम् ।[49] एष ग्रन्थः केनचिदविदितनाम्ना ग्रन्थकारेण निरमायीति एस.के. देमहोदयो मनुते ।[50] डा. विण्टर–निट्ज़मतेनास्य विलक्षणकोशस्य विभिन्ना भागाः कतमेन समयविशेषेण सह सम्बद्धा इति वक्तुमशकम् ।[51] अयं विश्वकोशः कदाऽलिख्यतेति वक्तुं दुष्करं परं नियतमेवेयं रचनेस्लाममतप्रसारकाणां भारतस्योपरि विहितादाक्रमणाद् बहुकालपूर्वमलेखीति एम.एन. दत्तस्य मतम् ।[52] डा. एफ.ई. पार्जिटरनाम्ना सुधियाऽस्य कालो नवमात्क्रैस्ताब्दादुत्तरवर्त्ती–त्यङ्गीकृतम् ।[53]

गरुडपुराणम् – धर्मदृष्ट्या ऽस्य पुराणस्य प्रमुखं स्थानं विद्यते । अस्मिन् प्राचीना नवीनाश्चोभयविधा विषया उपलभ्यन्ते । गयामाहात्म्यं नवीनत्वादष्टमशताब्द्यां संयोजितमिति प्रतीयते । पार्जिटराख्य–विदुषाऽस्य कालो भविष्यपुराणाद् भूयानवरो मतः । भविष्यपुराणस्य च समयस्तेन 475 क्रैस्तात् पूर्वमङ्गीकृतः ।[54]

---

49 Wilson : Agni Purana (English Translation) Introduction, p.6.
50 S.K. De : The History of Sanskrit Poetics,Vol.II, p.254.
51 Winternitz : The History of Indian Literature, Vol.I, p.506.
52 M.N. Dutt : Agni Purana (English Translation) Introduction, p.5 (Calcutta 1901).
53 Pargiter : Ancient Indian Historical Tradition, p.80.
54 F.E. Pargiter : Ancient Indian Historical Tradition, p.50, Oxford University Press, London, 1922.

3. नारदीयपुराणम् – नारदीये पुराणे बौद्धानां महती निन्दा विहिता । महति आपदि समुपस्थितायामपि बौद्धमन्दिरेषु प्रवेशो न विधेय इति तत्र प्रतिपादितम् –

बौद्धालयं विशेद् यस्तु महापद्यपि वै द्विजः
न तस्य निष्कृतिर्दृष्टा प्रायश्चित्तशतैरपि ।
बौद्धाः पाषण्डिनः प्रोक्ता यतो वेदविनिन्दकाः ।।[55]

बौद्धान् प्रत्येतादृशो द्वेषभावः सप्तम्यां क्रैस्तशताब्द्यां प्रचलित आसीत् । अनेन नारदीयपुराणस्य समयः सप्तमनवमशताब्द्यो र्मध्यवर्ती विद्यते इति कथयितुं शक्यते ।

4. विष्णुधर्मोत्तरपुराणम् – अस्य पुराणस्याष्टादशसु महापुराणेषु गणना न क्रियते । अत एवेदमुपपुराणेष्वन्तर्भवति । इदं हि पुराणं विष्णुपुराणस्योत्तरार्धरूपेण प्रसिद्धं विद्यते । अस्य पुराणस्य केचन अंशाः प्राक्तनाः केचिच्च नवीनाः सन्ति । अस्मादस्य रचना विभिन्नेषु कालेष्वजायतेति प्रतीयते । डा. काणेमहोदयेन अस्य पुराणस्य समयः पञ्चमात् क्रैस्तशतकान्न पूर्व इति प्रतिपादितम् ।[56] विण्टरनिट्ज़महोदयेनास्य रचनाकालः 628 क्रैस्ताब्दादारभ्य 1000 क्रैस्ताब्दं यावत् स्वीकृतः ।[57]

5. विष्णुपुराणम् – अस्मिन् पुराणे भगवतो विष्णोर्गुणाः सविशेषमाख्याताः । अस्य पुराणस्य सर्वे षडंशाः पुराणस्य पञ्चलक्षणनियमेन सह सर्वथा सङ्गच्छन्ते यतो ह्येषु सर्गादयः पञ्चविषयाः क्रमेण वर्णिताः ।[58] विष्णुपुराणस्य रचयिता पराशर–मुनिर्विद्यते ।

---

55 नारदीयपुराणम् 15, 50

56 P.V. Kane : History of Sanskrit Poetics, p.68.

57 Winternitz : The History of Indian Literature, Vol.I, p.58.

58 सर्गश्च प्रतिसर्गश्च वंशमन्वन्तराणि च।
सर्वेष्वेतेषु कथ्यन्ते वंशानुचरितं च यत् ।।
विष्णुपुराणम्, 3,6,25

पार्जिटरमते नेदं पुराणमन्यपुराणेभ्य उत्तरकालवर्तीति पूर्वविचारितक्रमविशेषं चानुरुध्य लिखितम् । यथा वायुब्रह्ममत्स्यपुराणेषु विविधविषया विभिन्नेषु कालेषु सङ्कलिता न तथाऽस्मिन् पुराणे । अत्र पुराणे खल्वेकस्मिन् कालविशेषे वर्ण्यविषया यथाविध्येकत्र सन्निहिताः। बौद्धजैनधर्मयोर्वर्णनमप्यत्र दृश्यते । अत एवेदं ब्राह्मण– धर्मस्य पुनरुत्थानसमयात् पञ्चमक्रैस्तशतकान्न पूर्वतरमिति ज्ञायते।[59] जे.एन. फर्क्हराख्यसुधियो मतमिदम्–हरिवंशपुराणस्य समयश्चतुर्था– त्क्रैस्तशतकादुत्तरवर्ती न भवितुमर्हति । विष्णुपुराणस्य बहूनां सन्दर्भाणां हरिवंशपुराणस्य सन्दर्भैः सह सादृश्यमत एवोभयो रचना– कालः समान एव प्रतीयते ।[60] विष्णुपुराणं पञ्चमात् क्रैस्तशतकात् पूर्वतरमिति पार्जिटरमतमुपपन्नं स्यात्तथापि पुराणमिदं नास्मात्काला– दुत्तरकालिक इति विण्टरनिट्ज़महाभागस्य मतम् ।[61]

विष्णुभागवतहरिवंशपुराणानां तुलनात्मकेनाध्ययनेन विष्णु–पुराणस्य रचनाकालविनिर्णये भृशं साहाय्यं प्राप्यते । पूर्वं तावद्विष्णु–भागवतपुराणयोः प्रतिपाद्यविषयाणां विषये विचारो विधीयते । एतयोरनेकेषु विषयेषु परस्परं सादृश्यम् । विष्णुभागवतपुराणयोः शब्दबोध्योऽप्यर्थः समानः[62] (भगवान् = श्रीमान् {विष्णुः} तस्येदं पुराणं भागवतपुराणम् = विष्णुपुराणम्) । पुराणद्वयोपलब्धवंशावलीभागानां तुलनात्मकमध्ययनं विधाय पार्जिटरनामा सुधी भागवतपुराणे विष्णु–पुराणसामग्र्या उपयोगो विहित इति निश्चिनोति ।[63] ध्रुववेन पृथुप्रह्लादजडभरतादिविषयिण्यो बहवः कथा विष्णुपुराणे संक्षिप्ता अविकसितस्वरूपाश्च । इमाः खलु भागवतपुराणे यथेष्टं विकासं परिवर्धनं चालभन्त । भागवतपुराणस्य दशमे स्कन्धे कृष्णचरितस्य वर्णनम् । एतद्विष्णुहरिवंशपुराणयो वर्णनात् पृथुतरम् । गोपीभिः सार्धं विहितानां कृष्णस्य प्रेमलीलानां चात्र सविस्तरं वर्णनम् ।[64] अनेन हि

---

59 Pargiter : Ancient Indian Historical Tradition, p.80.
60 Farquhar : Outline of the Religious Literature of India, p.143.
61 Winternitz: History of Indian Literature, Vol.I, p.545, footnote 2.
62 Ibid, p.555.
63 Pargiter : Ancient Indian Historical Tradition, p.80.
64 Winternitz : History of Indian Literature, p.557.

विष्णुपुराणं भागवतपुराणात् पूर्वतरमिति प्रतीयते । यदि भागवतस्य समयः षष्ठे क्रैस्तशतके स्वीक्रियेत तर्हि विष्णुपुराणस्य रचनाकाल एतस्मात् कालात् पूर्वतरो भवेत् ।

हरिवंशपुराणे ऽपि कृष्णस्य चरितमतिविस्तरेण वर्णितम् । इदं वर्णनं विष्णुपुराणवर्णनाद्विपुलतरम् । जरासन्धस्य पारिजातहरणादीनां कतिपयाः कथा हरिवंशपुराणे सुविकसितस्वरूपा दृश्यन्ते । अनेन हरिवंशपुराणाद्विष्णुपुराणस्य पूर्ववर्तित्वं ज्ञायते । यदि हरिवंशपुराणस्य रचनाकालश्चतुर्थक्रैस्तशतकदेशीयो निश्चीयेत तर्हि विष्णुपुराणस्य समयश्चतुर्थक्रैस्तशतकस्य मध्यभागात्पश्चात्कालीनो भवितुमर्हति । इयं हि विष्णुपुराणस्योत्तरसीमा ।[65]

विष्णुपुराणस्यानेकेषु स्थलेषु कूर्मादिराशीनां राशिशब्दस्य च प्राचुर्येण प्रयोगः ।[66] अनेन विष्णुपुराणस्य रचनासमये जनानां राशिविषयकज्ञानवैपुल्यं द्योतते ।

आदिमवाङ्मयादारभ्य याज्ञवल्क्यस्मृतिकालं यावद्विद्वांसस्तिथि-ग्रहनक्षत्राणि त्वजानन् परं न ते राशीनधिकृत्य किमप्यवेदिषुः । यतो ह्येतत्कालान्तर्वर्तिनि साहित्ये राशिशब्दस्य प्रयोगो न कुत्रापि लक्ष्यते। याज्ञवल्क्यस्मृतावपि (द्वितीये क्रैस्तशतके) ग्रहयज्ञविधिप्रकरणे

---

65 Annals of the Bhandarkar Oriental Research Institute, Poona, Vol.XIV, 1932-33, p.182 f.n.

66 करोत्यहस्तथा रात्रिं विमुञ्चन् मेदिनीं द्विज ।
अयनस्योत्तरस्यादौ मकरं याति भास्करः ।।
ततः कुम्भं च मीनं च राशे राश्यन्तरं द्विज।
त्रिष्वेतेष्वथ भुक्तेषु ततो वैषुवतीं गतिम् ।।
विष्णु.पु. 2,8,30–31

षडेव राशीन् यो भुङ्क्ते रात्रावन्यांश्च षड् दिवा।
राशिप्रमाणजनिता दीर्घह्रस्वात्मता दिवे ।।
तथा निशायां राशीनां प्रमाणैर्लघुदीर्घता।
दिनादे दीर्घह्रस्वत्वं तद्भोगेनैव जायते।।
तत्रैव, 2,8,46–47

विषुवे चापि सम्प्राप्ते ग्रहणे शशिसूर्ययोः।
समस्तेष्वेव भूपाल राशिष्वर्के च गच्छति ।
तत्रैव, 3,14,5

सूर्यादिग्रहाणां तु वर्णनं परं न तत्र राशीनां कोऽपि सङ्केतः ।[67] अनेन याज्ञवल्क्यस्मृतिसमये राशीनां विषये लोकाः किञ्चिज्जज्ञुरनन्तरं च तज्ज्ञानं विष्णुपुराणसमये वृद्धिं जगामेत्यनुमातुं शक्यते । एवमेव विष्णुपुराणप्रयुक्तो होरेतिशब्दो विचारार्हः । वराहमिहिरेण (550 तमः क्रैस्ताब्दः) गर्गाद् द्वौ श्लोकावुद्धृतौ तत्र होरेति शब्दस्य प्रयोगः।[68] परं प्रथमक्रैस्तशतकसमाप्तिपूर्वमस्य प्रयोगो न कुत्रापि विलोक्यते। अतो राशिहोराशब्दयोरनेन निर्देशेन विष्णुपुराणं प्रथमात् क्रैस्तशतकात् पूर्वं न व्यरच्यतेति ज्ञायते । एवं विष्णुपुराणस्य रचनाकालः प्रथममस्य क्रैस्तशतकस्य समाप्तिकालादारभ्य चतुर्थक्रैस्तशतकस्य मध्यभागं यावदासीदिति प्रतीयते ।

6. मार्कण्डेयपुराणम् –

एतद्धि पुराणमृषिणा मार्कण्डेयेन (क्रौष्टुकिं शिष्यं प्रति) प्रोक्तत्वान्मार्कण्डेयपुराणमिति नाम्ना प्रसिद्धम् ।[69] अत्र श्लोकानां 6900 इति सङ्ख्या प्रोक्ता ।[70] नैतत्पुराणं केनचित्सम्प्रदायविशेषेण सह सम्बद्धम् । अत्र 134 अध्यायास्तेषु च मुख्यतमा इमे विषयाः – द्रौपदीकथा, हरिश्चन्द्रोपाख्यानम्, पितृपुत्रसंवादो देवादिविविधसृष्टि–कथा, जम्बुद्वीपादिवर्णनं स्वारोचिषौत्तमतामसरैवतचाक्षुषवैवस्वतसावर्णि–करौच्यभौत्यमन्वन्तराणां विवरणं देवीमाहात्म्यं वंशानुकीर्तनं च ।

अस्य पितृपुत्रसंवादनाम्नः प्रसङ्गस्य षट्चत्वारिंशदध्यायेषु (10–44 अध्यायाः) प्राणिनामुत्पत्तिक्रमो नरकविवरणं नरकयातनावर्णनं पतिव्रतामाहात्म्यं मदालसाकथा राजधर्मकथनं वर्णाश्रमकीर्तनं श्राद्ध–सदाचारवर्ज्यावर्ज्यकथनं योगविद्या, प्राकृतवैकृतसृष्टिवर्णनं च। देवी–माहात्म्यप्रसङ्गे च मधुकैटभमहिषधूम्रलोचनचण्डमुण्डरक्तबीजशुम्भ–निशुम्भवधवर्णनं देवीस्तोत्रं च। वंशानुकीर्तने च राज्यवर्धनपूषघ्नना–

---

67 याज्ञवल्क्यस्मृतिः 1,11

68 बृहत्संहिता पृ.7, 9

69 कथिता मुनिना पूर्वं मार्कण्डेयेन धीमता ।।
मार्कण्डेयपु. 134,39

70 श्लोकानां षट्सहस्राणि तथा चाष्टशतानि च।।
श्लोकास्तत्र नवाशीतिरेकादश समाहिताः ।
तत्रैव 134, 38–39

भागखनित्रविविंशखनिनेत्रकरन्धमावीक्षि तमरुत्तनरिष्यन्त दमाख्यनृपतीनां चरितानि।

अस्य पुराणस्य रचना कदा बभूव विषयेऽस्मिन विण्टरनिट्ज़महोदयस्य मतमाश्रित्य विचारो विधीयते । इदं हि पुराणं वर्तमानेषु पुराणेषु रोचकतमं पुरातनतमं च। अत्राप्यन्यपुराणेष्विव विषयवैविध्यं दृश्यते। इमे च विभिन्ना विषया विभिन्नेषु कालेषु निरमीयन्तेति प्रतीयते। क्रौष्टुकिमभिलक्ष्य मार्कण्डेयेन प्रोक्ता अंशाः (45-81 अध्यायाः, 93–134 अध्यायाः) पुरातनतमा इति ज्ञायते। एष्वध्यायेषु प्रायशः पुराणेषूपलभ्यमानाः सृष्टिवर्णनसर्गकालवंशावली–सदृशाः विषया वर्णिताः। अस्मिन् पुराणेऽग्निसूर्यादिवैदिकदेवानां विभिन्नेष्वध्यायेषु वर्णनम्। सूर्यदेवविषयिण्योऽनेका गाथा अप्यत्रोपलभ्यन्ते। इन्द्रब्रह्मणोरपि सविशेषं वर्णनं दृश्यते, परं नात्र शिवविष्ण्वोः किमपि स्थानवैशिष्ट्यम्। सम्प्रदायविशेषेण सहेदमेव निरपेक्षत्वमस्य प्रत्नतमत्वस्याभिसूचकम्। अस्य पुराणस्य राजवंशानुकीर्तनपरा द्वादशाध्यायाः (99–110) पुरातनतमा इति पार्जिटरमतमङ्गीकुर्वता विण्टरनिटज़महोदयेनेमेऽध्याया अस्मात्कालादपि पूर्ववर्तिनो भवितुमर्हन्तीति प्रतिपादितम्।[71]

देवीमाहात्म्याभिधो भागः (78–90) अस्मिन् पुराणे पश्चात्संयोजित इति प्रतीयते। अस्य समयः षष्ठक्रैस्तशतकादुत्तरं न भवितु युज्यते। एवमस्य पुराणस्य रचनाकालस्तृतीयक्रैस्तशतकादथवैतस्मात्कालात्किञ्चित्पूर्ववर्तिनः कालादारभ्य क्रैस्तशतकं यावदनुमीयते।[72]

## 7. भागवतपुराणम्

इदं पुराणं वैष्णवसम्प्रदायेन सह सम्बद्धम्। भगवत इदं साऽस्य देवता वेति भागवतस्य व्युत्पत्तिनिमित्तो ऽर्थः।[73] भगवान् (=श्रीमान्) इति भगवतो विष्णोर्नाम तत्सम्बन्धादस्य पुराणस्यापि भागवतमिति नाम। अस्मिन् पुराणे द्वादशस्कन्धाः सन्ति तेषु चाष्टादशसहस्राणि श्लोकाः समाहिताः। सृष्ट्युत्पत्तिविषयिण्यः कथा

---

71 Winternitz: The History of Indian literature, Vol.I, pp.559-560.
72 Ibid, p.565.
73 Ibid, pp.555-556-

विष्णुपुराणेन सह सर्वथा संवदन्ति क्वचिदेव तास्वल्पीयान् विसंवादः। ध्रुवप्रह्लादादीनां कतिपयाः कथा विष्णुपुराणोक्तकथाभिः सह भृशं सादृश्यं भजन्ते। अस्य द्वादशाध्यायानां मध्ये विभिन्ना विषया विवेचिताः।

भागवत्पुराणस्य रचनाकालविषये विदुषां मध्ये नैकमत्यं दृश्यते। कोलब्रुकबरनफविलसनाख्यसुधिभिर्बोपदेवो नियतं भागवत्–पुराणकर्तेति त्रयोदशशतके ह्येतद्निर्मितमिति च प्रतिपादितम्। अस्य समयो दशमक्रैस्तशतकमिति निर्धारणायानेकानि प्रमाणानि खल्व–स्मत्सविधे इत्यस्ति विण्टरनिट्ज़महाभागस्योक्तिः। ए.ए. मैकडोन–लाख्यविदुषा चोक्तम्–प्रायश इयं रचना द्वादशक्रैस्तशतके विहितेत्यङ्गीकर्तुं शक्यते ।[74] सी.वी वैद्येन अस्य पुराणस्य समयः दशमक्रैस्तशतकस्य मध्ये निर्धारितः।[75] वी.एन. कृष्णमूर्तिः मतमिदम्–एतत् पुराणं दशमे क्रैस्तशतके सुप्रसिद्धिं जगाम सप्तमे च क्रैस्तशतके व्यरच्यत कामं तस्य समयो ऽस्मात् पूर्वं न स्वीक्रियेत।[76] विष्णुपुराणस्य विषयसूच्यां भागवतपुराणस्यैतन्नाम ग्रहणमेतस्य पुराणस्य प्रत्नतमत्वमभि सूचयति–

ब्राह्मं पाद्मं वैष्णवं च शैवं भागवतं तथा।[77]

74 Macdonell : A History of Sanskrit Literature,p.302.

75 C.V. Vaidya: The Date of Bhagwavatapurana: Journal of Royal Asiatic Society (New Series Vol. 1925, p.147.

76 Annals of the Bhandarkar Oriental Research Institute, Poona, Vol.XIV, 1932-33, p.218.

77 विष्णुपुराणम्, 3,6,2; तस्येदम् 4,3,120; साऽस्य देवता। अ. 4,2,24

# पुराणानां विभिन्नसंस्करणान्यनुक्रमविकासश्च

**विभिन्नसंस्करणानि**– अष्टादशपुराणानां विरचनमेकस्मिन्नेव काल–विशेषे केनचिदेकेनैव विदुषा न व्यधायि। एषां विभिन्नभागा विभिन्नै–र्विद्वद्भिर्विभिन्नेषु कालेष्वसृज्यन्त। इदानींतनानां पुराणानां भाषा प्रायशः प्रसादगुणोपेतत्वान्नातिदुर्बोधा। इयं हि वेदब्राह्मणसूत्रग्रन्थानां भाषया सह प्रायेण संवदति।पुरातनकाले वेदब्राह्मणपुराणादीनि श्रुति–परम्परयाऽश्रूयन्त । एतेषां भाषा विषयप्रतिपादनरीतिर्वर्ण्यविषयाश्च देशकालपात्रादिभेदेन कदाचिच्छनैः शनैः कदाचिच्च सत्वरं परिवर्तनं लेभिरे। समये समये च तेषु काचिन्नवीना सामग्री संयोजिता काचित्प्रत्ना च तेभ्यो निष्कासिता। पुराणानां कतिपये विषयाः प्राचीनतमाः कतिचिच्चार्वाचीनतमाः । पुराणेषु वर्तमानाया उर्वशी–पुरुरवसोः प्रेमगाथाया मूलं वैदिकसाहित्ये प्राप्यते । भविष्यपुराणस्य बहवो वर्ण्यविषया उत्तरकालवर्तिनः सन्ति।

विभिन्नेषु कालेषु पुराणानामनेकानि संस्करणानि निरमीयन्तेति विषयकाः सङ्केता अनेकेषु पुराणेषूपलभ्यन्ते। हरिवंशपुराणे पद्म–पुराणे चादिमपुराणमिति शब्दस्य प्रयोगः। भविष्यपुराणस्य प्रतिसर्ग–पर्वणि विक्रमादित्येन नैमिषारण्ये विदुषां समाह्वयो विधास्यते तत्र चाष्टादशपुराणान्युपपुराणानि च पुनरुक्तानि भविष्यन्तीत्युक्तिरुप–लभ्यते।[1] एतेन विक्रमादित्ये राजनि शासति सतीमानि खल्वादि–

---

[1] (क) श्रृणुष्वादिपुराणेभ्यो देवताभ्यो यथाश्रुतः ।
ब्राह्मणानां च वदतां श्रुतोऽस्माभिर्महात्मनाम् ।
हरिवंश. 3,7,11

(ख) श्रृणुष्वादिपुराणेषु देवेभ्यश्च यथाश्रुतम् ।
पद्म 1,39,11

(ग) तन्मया कथितं सर्वं हृषीकोत्तम पुण्यदम् ।
पुनर्विक्रमभूपेन भविष्यति समाह्वदयः ।।
नैमिषारण्यमासाद्य श्रावयिष्यति वै कथाम् ।
पुनरुक्तानि यान्येव पुराणान्यष्टादशानि वै ।।
तानि चोपपुराणानि भविष्यन्ति कलौ युगे ।
भविष्य. 3,4,3–5

(कोशोत्सवस्मारकग्रन्थः – सम्पादकः – महामहोपाध्याय रा.ब.

पुराणानि पुनरुक्तान्यजायन्तेति प्रतीयते। अनेन च पुनरुक्त शब्दे–नाद्यत्वे प्रयुज्यमानं नवीनसंस्करणमित्यर्थोऽभिव्यज्यते। नवीने हि संस्करणे समुचितं परिवर्तनं परिवर्धनं च विधीयेते। कदाचित्तु प्रत्नसामग्रीमात्रमेवादाय तत्सर्वं नूतनया भाषया निबध्यते। एतत् सर्वमेषु पुराणेष्वप्यभवदिति कथनं नानुमानप्रमाणविरोधि। एवमेव विष्णुपुराणोपलब्धमूलसंहिताशब्देन मूलभूतार्थद्योतकादिमपुराणस्यास्ति–त्वस्य प्रतीतिर्जायते।[2]

एतेषां हि पुराणानां रचना सर्वप्रथमं कदा प्रारेभे इति विषये न किमपि वक्तुं शक्यते। कतिपयपुराणेषु पुराणानि वेदादिभ्यः शास्त्रेभ्यो ऽपि पूर्वतराणीति प्रतिपादितम्।[3] परमेतेषां पुराणानां भाषायाः सूक्ष्मा– ध्ययनेनेमानि वेदेम्यो बहुकालानन्तरं विरचितानीति स्फुटं द्योतते।

अतएवात्र प्रयुक्तानीमानि वाक्यान्यर्थवादवाक्यान्युत पुराण–विषयवस्तुप्रत्नत्वसूचकान्यथवाऽऽदिमं पुराणं वेदेभ्योऽपि पूर्वतरमासी–दित्यर्थबोधकानि। ऋग्यजुस्सामभिः सहैव पुराणान्यपि प्रादुरभवन्नि–त्यथर्ववेदे प्रोक्तम्।[4] अनेनास्य साहित्यस्यास्तित्वं वैदिके युगे ध्रुव–मेवासीदिति प्रतीयते। पार्जिटरमहोदयेन वैदिकवाङ्मये पूर्णविकास–मुपगतवति किं वा तद्वविकासावस्थायामारब्धायां सत्यां मूलपुराणं

---

गौरीशंकर हीरानन्द ओझा (पुराणों के महत्त्व का विवेचन– रायबहादुर पण्ड्या बैजनाथ बी.ए.) पृ.297–298 नागरीप्रचारिणी सभा काशी संवत् 1985.

2 काश्यपः संहिताकर्ता सावर्णिश्शांसपायनः ।
रोमहर्षणिका चान्या तिसृणां मूलसंहिता ।। – विष्णुपु. 3,6,18

3 (क) प्रथमं सर्वशास्त्राणां पुराणं ब्रह्मणा स्मृतम् ।
अनन्तरं च वक्त्रेभ्यो वेदास्तस्य विनिस्सृताः ।। – वायुपु. 1,203
प्रथमं सर्वशास्त्राणां पुराणं ब्रह्मणा स्मृतम् ।
अनन्तरश्च वक्त्रेभ्यो वेदास्तस्य विनिःसृताः ।। – ब्रह्माण्डपु. 1,58
(कोशोत्सवस्मारकग्रन्थः पृ.292)

(ख) पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणा स्मृतम् ।
अनन्तरं च वक्त्रेभ्यो वेदास्तस्य विनिर्गताः ।। –मत्स्यपु. 53,3

4 ऋचः सामानि छन्दांसि पुराणं यजुषा सह । – अथर्व. 11,7,24

व्यरच्यतेति मतम्।[5] इदं पुराणशास्त्रमादावेकमेवासीदिति पण्ड्यो-पाह्वबैजनाथेन सङ्कलितैरधोलिखितैः प्रमाणैः सुविशदं ज्ञायते।[6]

अथर्ववेदे पुराणशब्द एकवचने प्रयुक्तः।[7] महाभारतेऽप्येष एकवचने दृश्यते।[8] आदिपुराणमेकमेवासीदिति पुराणेष्वपि निर्दिष्टम्।[9] अनेनादावेकमेव महापुराणमवर्ततेत्यनुमातुं जायते।

अथ गच्छति कालेऽस्मादेकस्मात्पुराणात् सम्प्रत्युपलभ्यमानानि ब्रह्मादीन्यष्टादशपुराणान्यजायन्त। अस्मादेवादिमपुराणादल्पामनल्पां वा सामग्रीमादाय तया सहान्यान् विविधान् विषयान् संयोज्याष्टा-दशपुराणानि पृथक् पृथग् व्यरच्यन्तेत्यप्यनुमानं कर्तुं शक्यते।

## 2. अनुक्रमविकासः –

प्रो. शिवदत्तज्ञानिना पुराणानां विविधविषयान् दशसुभागेषु विभज्य पुराणसाहित्यस्यानुक्रमविकासः सविस्तरं प्रदर्शितः ।[10] तल्लेखमाश्रित्यात्रैतद्विषये विचार्यते –

(1) आख्यानानि (2) वंशावलीवर्णनम् (3) सृष्टिविद्या (4) गाथाः (5) वर्णाश्रमधर्माः (6) युगधर्माः (7) श्रद्धाः संस्काराश्च (8) धर्मा दर्शनानि च (9) भक्तिसंस्कृत्यन्तर्गता भगवतो विष्णोरवतारा-स्तीर्थमाहात्म्यानि च (10)काव्यशास्त्रव्याकरणज्योतिषविद्यादयो विवि-धविषयाश्च । इमे खलु दशविधा विषया अधोवर्णितासु चतसृष्व-वस्थासु यथाक्रममवर्धन्त –

---

5 Pargiter : Ancient Indian Historical Tradition, pp.30 & 54.

6 कोशोत्सवस्मारकग्रन्थः, पृ.292–294.

7 अथर्व. 1,7,24

8 विद्वद्भिः कथ्यते लोके, पुराणं कविसत्तमैः । – महाभा. 1,240

9 (क) पुराणमेकमेवासीत्तदा कल्पान्तरेऽनघ ।<br>त्रिवर्गसाधनं पुण्यं शतकोटिप्रविस्तरम् ।। – मत्स्यपु. 53,4

(ख) पुराणमेकमेवासीदस्मिन् कल्पान्तरे नृप । – शिवपु. 1,23,30

(ग) आख्यानैश्चाप्युपख्यानैर्गाथाभिः कल्पशुद्धिभिः ।<br>पुराणसंहितां चक्रे पुराणार्थविशारदः ।। – विष्णुपु. 3,6,15

10 V.S. Agrawal : Purāna (The Date of the Puranas in S.D. Gyani), Vyasa Purnima number, Vol.II, nos.1-2 July 1960 pp.68-75; All India Kashiraja Trust, Fort Ramanagar, Varanasi.

(1) आख्यानवंशावस्था – वैदिककालाद् (क्रि.पू. 1200) आरभ्य महाभारतकालं (क्रि.पृ. 950) यावत् ।

(2) पुराणविभाजनावस्था भविष्यवंशावल्यवस्था वा महा–भारतकालात् क्रि.पू. पन्चमशतकपर्यन्तम् ।

(3) पन्चलक्षणावस्था– क्रि.पू. पन्चमशतकादारभ्य क्रिस्ता–ब्दारम्भपर्यन्तम् ।

(4) साम्प्रदायिकी विश्वकोशरूपात्मिका वावस्थाक्रिस्ताब्द–स्यारम्भात् क्रैस्तसप्तमशतकपर्यन्तम् ।

1. आख्यानवंशावस्था

आदिमे पुराणे परम्परागता : प्रत्नतमा गाथा आसन्, अनन्तरं च तस्मिन्नुपारख्यानानि नृपाणां वंशावल्यश्च समाविष्टाः। एतद्विषयक : सूक्ष्मः सङ्केतो विष्णुपुराणेऽपि दृश्यते।[11] इदानींतनपुराणानामाख्यानवंशा–वलीभागानां विषयवस्तु तावदतीव प्रत्ना परं भाषार्वाक्तना। वैदिककाला–दासन्नवर्तिनि भूतकाले जायमानानां वीराणां मुनीनां च वृत्तानि वैदिक–कालोत्तरवर्तिन्या संस्कृतभाषयोपनिबद्धाः। इयं हि भाषोपनिषन्महाकाव्येषु प्रयुज्यमानया भाषया सह भृशं संवदति। ऐतिहासिकदृष्ट्यैतेषां पुरातन–तमवृत्तानामतीव महत्त्वम्। उर्वशीपुरुरवसोर्ययातेर्हरिश्चन्द्रस्य, रामस्य जमदग्नेः कार्तवीर्यार्जुनादीनां चोदन्तानां साहाय्येन पुरातनकाले लब्ध–सत्ताकानां नृपाणामनुक्रमेतिहासनिर्माणं विधातुं शक्यते। एतेभ्य आख्यानेभ्य ऋते न किमप्यन्यत्साधनं तदानींतनमितिहासं ज्ञातुमस्मत्सविधे। एवं पौराणिकविषयाणां विकासस्य प्रथमावस्थायां प्रत्नतमान्याख्यानानि वंशावल्यश्च समावेशयितुं शक्यन्ते। पुराणानामादिमं स्वरूपमप्येतावन्मात्र–मासीदिति प्रतीयते। इयं हि प्रथमावस्था–आख्यानवंशावस्थेति नाम्ना व्यपदेष्टुं शक्यते। अस्मिन् हि काले कदाचिद् वेदा इवेदमादिमं पुराणमपि श्रुतिपरम्परयाऽश्रूयत। महाभारतकालं यावत्तस्मिन् यदा कदा स्वल्पमेव परिवर्तनमजायत। महाभारतयुद्धे भूयांसों विद्वांसोऽभूवन् कालकवलिताः।

---

[11] आख्यानैश्चाप्युपाख्यानैर्गाथाभिःकल्पशुद्धिभिः ।
पुराणसंहितान्चक्रे पुराणार्थविशारदः ।। – वि.पु. 3,6,15

अनेनावशिष्यमाणाया विद्याया रक्षणस्य महती समस्या समायाता। महर्षेः कृष्णद्वैपायनव्यासस्य तत्त्वावधाने ऽवशिष्टां विद्या रक्षितुं विद्वद्भिः सम्भूय भृशं येते। तदात्वे समुपलभ्यमानान्याख्यानानां वंशावलीनां च विवरणानि ते मनीषिण आदिमे पुराणे सञ्जग्रहुः। आदिमपुराणस्येदं संस्करणं महाभारतकालं यावद् विद्यमानां सामग्रीं दधौ। पूर्वप्रचलितायां व्यासपरम्परायां महाभारतकालीनो व्यासो व्यास आसीदिति मतं पौरत्स्यपाश्चात्यविदुषां मध्येप्रचलत्येव।

## 2. भविष्यवंशावल्यवस्था विभाजनावस्था वा

पुराणसाहित्यस्य विकासस्य द्वितीयावस्थायां पुराणेषु विद्यमानं भविष्यत्कालविषयकं वर्णनमर्न्तभवति। सम्प्रत्युपलभ्यमानानां पुराणानां वंशावलीभागेषु महाभारतात्पश्चाद्वर्तिनां राज्ञां वर्णनावसरे भविष्यत्काल–वाचिनो लृट्लकारस्य प्रयोगो दृश्यते। महाभारतादनन्तरं पश्चाद्–भाविनामन्येषामपि नृपाणां बहूनि वृत्तानि श्रुतिपरम्परया प्रसस्रुः। तेषामपि सङ्ग्रहस्तदानीमपैक्ष्यत। परं महर्षिव्याससम्पादिते संस्करणे तानि कथं स्थानमवाप्नुयुरित्यासीद्विदुषां समक्षे प्रश्नः। एतदर्थमेका नवीना पद्धति–राविष्कृता। महाभारतात्पश्चाद्भाविनां नृपाणां वृत्तानां कृते भविष्यत्कालस्य प्रयोगो निर्धारितः। एवं व्यासरचिते पुराणे प्रक्षेपाणां समावेशेनापि महाभारतात्पूर्ववर्तिनां पश्चाद्वर्तिनां च राज्ञां वृत्तेषु भेदो ऽजायत। अपरञ्चानेन महर्षेर्व्यासस्य क्रान्तदर्शितत्वमपि संसूच्यते। स मुनिर्योगबलेन महाभारतादनन्तरभाविनां नृपाणां वृत्तमवेदीद् येनात्र तेन भविष्यद्वाण्यः प्रयुक्ता इत्येव लोकाश्चिन्तयेयुरिति विचिन्त्य तदानींतनैविद्वद्भि र्लृटलकारस्य प्रयोगों विहित इति प्रतीयते।

अथ गच्छति कालेऽस्य पूरकसंस्करणस्य परिमाणमुप–बृंहितमजायत। इदं च संस्करणमन्यः कश्चित्स्वतन्त्र इव ग्रन्थो जातः। अयं च ग्रन्थो भविष्यपुराणमिति नाम्ना प्रसिद्धिं यातः। आपस्तम्बधर्मसूत्रे सम्भवतो ऽस्यैव ग्रन्थस्य नामोपलभ्यते।[12] पुराणेषु महाभारतोत्तरवर्ती कालो भविष्यनाम्ना निर्दिष्ट इति पार्जिटरमहोदयेनाप्यङ्गीकृतम्।[13] बुह्लरेणा–पस्तम्बधर्मसूत्रस्य पूर्वसीमा क्रि॰पू॰ पञ्चशतकमुत्तरसीमा च क्रि॰पू॰

---

12 पुनस्सर्गे बीजार्था भवन्तीति भविष्यत्पुराणे । – आप.2,9,24,6

13 Ancient Indian Historical Tradition, pp.53-55.

तृतीयशतकं मतम्।[14] आपस्तम्बधर्मसूत्रादेकस्माद् द्वाभ्यां वा शतकाभ्यां पूर्वं भविष्यत्पुराणं प्रादुर्बभूवापस्तम्बधर्मसूत्रस्य च कालं यावद् धर्मशास्त्र–पदवीमवाप। सम्भवतः क्रिस्तात् प्रायः षष्ठशतकपूर्वमादिमपुराणं महाभारत–कालमाश्रित्य द्विधा विभाजितम्। महाभारतोत्तरवर्तीनि चाख्यानानि भविष्यपुराणे सङ्कलितानि। अनन्तरं चान्येषु पुराणेष्वप्येतादृशान्याख्यानानि प्रक्षिप्तानि। इदानींतनेषु पुराणेषु यत्र यत्र भविष्यत्कालार्थवाचिना लृट्–लकारेण वर्णनानि विहितानि तत्र तत्र महाभारतोत्तरवर्तिनामाख्याना–नामनुमानं भवितुमर्हति। पुराणानामेतादृशेषु स्थलेषु भविष्यवक्तृसिद्ध–वचोभिरिव वर्णनं विधीयते। पुराणसाहित्यस्य विकासस्यास्यामवस्था–यामादिमपुराणस्य विभागोऽजायतेत्यस्मात्कारणादियमवस्था विभाजनावस्थेति सञ्ज्ञां लब्धुं शक्रोति। अस्यां भविष्यवंशावलीनां वर्णितत्वादस्या अपरं नाम भविष्यवंशावल्यवस्था ऽपि भवितुं युज्यते। स्थूलदृष्ट्याऽस्या अवस्थायाः समयः प्रायः 950 क्रि॰पू॰– प्रायः 500 क्रि॰पू॰ निर्धारयितुं शक्यते।

## 3. पञ्चलक्षणावस्था

पुराणसाहित्यस्य विकासस्यास्यामवस्थायां सृष्टिवर्णनस्य, मनुयुगानां दार्शनिकविचाराणामन्येषामप्येतादृशविचाराणां समावेशो दृश्यते। पूर्वतरपुराणेष्वपरिमार्जितस्वरूपाः सांख्योगदर्शनयोः सिद्धान्ता उपलभ्यन्ते। अपि पुराणेषु कतिपयाः समाजनियमाः संस्कारा व्यवहारनियमाश्च वर्णाश्रमयुगधर्माणां श्राद्धकल्पादीनां च प्रसङ्गेषु दृश्यन्ते। हयं हि दार्शनिकी धर्मशास्त्रविषयिणी च सामग्री तृतीयाया अवस्थाया आदिमं स्वरूपं प्रतीयते।

क्रिस्तात् षष्ठशतकपूर्वमुत्तरभारते दार्शनिकेषु धार्मिकेषु च विचारेष्वभ्युत्थानमजायत। तदानींतना विचारका मोक्षप्राप्तेरुपायान् चिन्तयामासुः। सृष्टिरचनाजन्ममरणात्मपरमात्मविषयका विचारा युक्ति–प्रत्युक्तिपुरस्सरं पुराणेषु प्रवेशं लेभिरे। एवं पुराणसाहित्यस्याख्यानोपाख्यानैः सह दार्शनिकविचारा अपि संयुक्ताः। दार्शनिकविचाराणामयं समावेशः क्रिस्तात् पूर्वं षष्ठशतकादारभ्यः क्रैस्तयुगस्यारम्भकालं यावदजायतेत्यनुमानं जायते। एतेषां दार्शनिकविचाराणां सम्मिश्रणात्पूर्वमाख्यानान्युपाख्यानानि वंशावल्यो ऽन्ये ऽपि चैवंविधा विषयाः पुराणसाहित्यं ऽवर्तन्त। अन्येषां

---

14 Sacred Books of the East Vol.II, p.4

विषयाणामनेन संयोगेन पुराणसाहित्यस्यादिमं स्वरूपं परिवर्तनमलभत। अस्मिन् काले पुराणे न केवल पुरातनकालीनानि वृत्तानि विषया वाऽऽसन्नपितु तत्र नवीना दार्शनिका विषया अपि पदमवापुः । अत एव पुराणस्य पुरा ह्यनितीद पुराणमिति[15] परम्परागतं पुराणलक्षणमनेन पुराणसाहित्येन समं नोपपन्नमभवत्। अत एवास्मिन् काले सर्गादि- पंचविषयात्मकं लक्षणं पुराणस्य कृते निर्धारितम्।[16] इमानि परिवर्त- नान्यनृरुध्यैव पुराणं पन्चलक्षणमित्येवंरूपा पुराणस्य पन्चलक्षणात्मिका परिभाषा व्यधायि।

## 4. साम्प्रदायिकी विश्वकोशरूपात्मिका वावस्था–

क्रैस्तसंवत्सरस्यारम्भवेलायां भारतवर्षे भक्तिसम्प्रदायस्यासीद् भूयान् प्रचारः। तस्मिन् काले ऽयं सम्प्रदायो हिन्दूधर्मस्य प्रधानाधारोऽभूत्। ब्रह्मविष्णुशिवादीनां देवानां पूजनं तदार्नीतनानां हिन्दूनां धार्मिके जीवने स्थानवैशिष्ट्यमलभत। अस्य सम्प्रदायस्य प्रभावेण पुराणसाहित्यमपि भृशं प्रभावितमभवत् विभिन्नदेवतोपासनपरायणैर्विद्धद्भिर्भक्तैस्तत्तद्देवविशेषस्य वृत्तैर्माहात्म्यैर्वा साहित्यमिदं प्रपूरितम्। अनेन पुराणसाहित्यस्य परिमाणं परां वृद्धिमगमत्। विभाजनावस्थायामष्टादशपुराणानां पृथक्पृथक् स्वरूपाण्य- भवन्। एतत्सामग्रीमिश्रणानन्तरमिमानि पुराणानि महापरिमाणत्वान्महापुराणा- न्यजायन्त। विषयवैविध्यवशात् पुराणानां पुरातनं पन्चलक्षणात्मकं लक्षणं तदानीतनैः पुराणैः सममसङ्गतिमयात्। अतएव तदानीं विद्धद्भिभ पुराणानां पन्चलक्षणात्मकं लक्षणं परित्यज्य तेषां दशलक्षणात्मकं लक्षणं निर्धारितम्।[17] तस्मिन् समये सम्प्रदायविशेषानुरक्तः कतिपयैर्भक्तैः स्वस्वमतप्रसारायो- पपुराणानि स्तोत्रग्रन्थाश्च विरचिताः। प्रायशः सर्वेषु महापुराणेषु साम्प्रदायिकी सामग्री प्राधान्येनोपलभ्यते। उपपुराणेषु स्तोत्रग्रन्थेषु च समग्रं विषयवस्तु साम्प्रदायिकंविद्यते साम्प्रदायिकविषयवस्तुभागश्चिरन्तनकालाद- नवरतं विकासोन्मुखे पुराणसाहित्ये बाह्यतः संयोजितोऽन्तिमः प्रक्षेप आसीदिति वक्तुं पार्यते। एवमनेन प्रक्षिप्तभागेनोपबृंहितानि पुराणानि

---

15 वायु. 1,203

16 सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
वंशानुचरितं चैव पुराणं पन्चलक्षणम् ।। – देवीभागवतम् 1,2,18

17 अत्र सर्गो विसर्गश्च स्थानं पोषणमूतयः ।
मन्वन्तरेशानुकथा निरोधो मुक्तिराश्रयः ।। – भागवत. 2,10,1

स्वकीये विकासक्रमे ऽन्तिमामवस्थामवापुवन्निति प्रतीयते। पुराणसाहित्य-स्यानुक्रमविकासदृष्टयेयमवस्था चरमास्ति यतो ह्यस्यामवस्थायां प्राधान्येन साम्प्रदायिकविषयाणां पुराणेषु समावेशो व्यधीयतातएवास्याः साम्प्रदायिक्य-वस्थेतिनाम भवितुमर्हति। अपि चास्मिन् काले साम्प्रदायिकविषयानतिरिच्य व्याकरणालङ्कारकाव्यशास्त्रनाट्यशास्त्रादिविविधविषया अपि पुराणेषु संयोजिता अतएवास्या विश्वकोश रूपात्मिकावस्थेत्यपरं नामापि समीचीनम्। अस्याश्चावस्थायाः समयः प्रथमात् क्रैस्तशतकादारभ्य सप्तमं क्रैस्तशतकं यावन्निर्धारयितुं पार्यते।

# पुराणानां रचयितारः

अष्टादशपुराणानां सङ्कलनं सम्पादनं च वैदिककालादारभ्य क्रिस्तस्य सप्तमं शतकं यावदभवत्। एवं विभिन्नेषु कालेष्वेतत्साहित्यं विभिन्नैर्विद्वद्भिः सम्पादितम्। पुराणानामन्तःसाक्ष्यैः महाभारतकालिकः कृष्णद्वैपायनो व्यास एव सर्वेषामष्टादशपुराणानां रचयिताऽऽसीदिति ज्ञायते। मत्स्यपुराणे ऽष्टादशपुराणानि विधाय सरस्वतीसुतेन व्यासेन महाभारतस्य रचना विहितेति प्रोक्तम्।[1] व्यासो भागवतीं संहितां विरचय्य तां स्वपुत्रं शुकं पाठयामासेति भागवतपुराणे लिखितम्।[2] विष्णुपुराणानुसारं पुराणार्थविशारदेन व्यासेनाख्यानादिसंवलिता पुराणसंहिता विरचिता सा च लोमहर्षणाख्यशिष्याय प्रादीयत । तस्य लोमहर्षणस्य सुमत्यग्निवर्चोमित्रयुशांसपायनाकृतव्रणसावर्णिनामधेयाः षट्संख्याकाः शिष्या आसन्। एतेषामकृतव्रणसावर्णिशांसपायनैस्त्रिभिः शिष्यैर्लोमहर्षिणीं संहितामाश्रित्य तिस्रः संहिता निरमीयन्त।[3] एवं विष्णुपुराणे पुराणानां मूलसंहिता तु व्यासेनैव निरमायि परं तदनन्तरं तिस्रः संहितास्तस्य प्रशिष्यैः समपाद्यन्तेति कथनेन पुराणानामनेक-कर्तृत्वस्य स्वीकारोक्तिर्विद्यते।

---

1 अष्टादशपुराणानि कृत्वा सत्यवतीसुतः ।
भारताख्यानमखिलं चक्रे तदुपबृंहितम् ।।
लक्षैकेण यत्प्रोक्तं वेदार्थपरिबृंहितम् ।।
मत्स्यपु. 53,69

2 स संहितां भागवतीं कृत्वानुक्रम्य चात्मजम् ।
शुक्रमध्यापयामास निवृत्तिनिरतं मुनिः ।।
भागवतपु. 1,7,8

3 आख्यानैश्चाप्युपाख्यानैर्गाथाभिः कल्पशुद्धिभिः ।
पुराणसंहितान्चक्रे पुराणार्थविशारदः ।।
प्रख्यातो व्यासशिष्योऽभूत् सूतो वै लोमहर्षणः ।
पुराणसंहितां तस्मै ददौ व्यासो महामतिः ।।
सुमतिश्चाग्निवर्चाश्च मित्रयुश्शांसपायनः ।
अकृतव्रणसावर्णी षट् शिष्यास्तस्य चाभवन् ।।
काश्यपः संहिताकर्त्ता सावर्णिश्शांसपायनः ।
रोमहर्षणिका चान्या तिसृणां मूलसंहिताः ।।
विष्णुपु. 3,6,15–18

व्यासशब्दस्य व्युत्पत्तिनिमित्तोऽर्थो विभागकर्ता सङ्ग्रहकर्ता वेति संस्कृतशब्दार्थकौस्तुभे दृश्यते ।[4] आप्टेकृते कोशेऽपीमौ द्वावर्थौ विद्येते । अपरञ्च तत्र वेदानां सम्पादनादेव व्यासो व्यासपदवीं प्रापेत्यपि भारतमञ्जर्या मुद्धृतम् ।[5] सम्भवतो वैदिककालात् प्रारभ्य क्रैस्ताब्दस्य सप्तमं शतकं यावदनेके व्यासा अभूवन् तैश्च समये समये वेदानां महाभारतस्याष्टादशपुराणानां च सम्पादनं विहितम्।

अनेकेषां व्यासानामस्तित्वस्य प्रमाणानि विष्णुपुराणेऽपि दृश्यन्ते। पराशरो मैत्रेयमेवं कथयति– प्रतिद्वापरं भगवान् विष्णु–र्व्यासरूपेणावतीर्य वेदं विभाजयति, तेन तस्य वेदव्यास इति संज्ञा जायते।[6] वेदानां विभागा अष्टाविंशतिव्यासैरष्टाविंशतिकृत्वो विहिताः।[7] एषु व्यासेषु सर्वप्रथमो व्यासो ब्रह्माऽन्तिमश्च पराशरपुत्रः कृष्णद्वैपायनो विद्यते। इमे ऽष्टाविंशतिव्यासाः प्राचीनाः।[8] भविष्यवाण्या

---

4 व्यासः (वि+√अस् +घञ्) विभागकर्ता–सङ्ग्रहकर्त्ता ।
संस्कृतशब्दार्थकौस्तुभः पृ.1081

5 विव्यास वेदान् यस्मात् स तस्माद् व्यास इति स्मृतः ।
व्यस्य वेदान् समस्तांश्च व्यासतामगमद् विभुः ।।
भारतमञ्जरी 3,214

6 द्वापरे द्वापरे विष्णुर्व्यासरूपी महामुने ।
वेदमेकं सुबहुधा कुरुते जगतो हितः ।।
ययासौ कुरुते तन्वा वेदमेकं पृथक् प्रभुः ।
वेदव्यासाभिधाना तु सा च मूर्त्तिर्मधुद्विषः ।।
विष्णुपुराणम् 3,3,537

7 अष्टाविंशतिकृत्वो वै वेदो व्यस्तो महर्षिभिः ।
वैवस्वतेऽन्तरे तस्मिन् द्वापरेषु पुनः पुनः ।।
वेदव्याख्या व्यतीता ये ह्यष्टाविंशतिः सत्तम ।
चतुर्धा यैः कृतो वेदो द्वापरेषु पुनः पुनः ।।
विष्णुपुराणम् 3,3,9–10

8 द्वापरे प्रथमे व्यस्तस्स्वयं वेदः स्वयंभुवा ।
जतुकर्णो ऽभवत्सतः कृष्णद्वैपायनस्ततः ।
अष्टाविंशतिरित्येते वेदव्यासाः पुरातनाः ।।
विष्णुपुराणम् 3,3,19

व्यासानन्तरं द्रोणस्य पुत्रोऽश्वत्थामा नवीनो व्यासो भविष्यतीति प्रोक्तम्।[9]

वस्तुतो वेदादीनां सम्पादनात्मकमिदं कार्यमेकेनैव विदुषा कर्त्तुं नाशक्यत। अष्टादशपुराणानां श्लोकसंख्या चतुर्लक्षदेशीया। महाभारतं चत्वारो वेदाश्चापि बृहद्ग्रन्थाः। वेदानतिरिच्यान्येषु ग्रन्थेषु प्राचीना अर्वाचीना चोभयविधा सामग्री दृश्यते। भाषाया वैविध्यमपि समुपलभ्यते। अनेन महाभारतं पुराणानि च विभिन्नकालेषु विभिन्नैर्विद्वद्भिः सम्पादितानीत्येवावगम्यते। महाभारतात्पूर्ववर्तिनः पश्चाद्वर्त्तिनश्च बहवो विद्वांसो व्यासपदवीं लेभिरे। एतेषु सर्वेषु व्यासेषु महाभारतकालिकः कृष्णद्वैपायनो व्यासो मूर्धन्यो बभूवेति भागवतवचनादपि ज्ञायते।[10] भागवतस्यानयोक्त्या व्यासानां संख्याया एकाधिकत्वस्य प्रतीतिः। कृष्णद्वैपायनस्येयतो गौरवस्य कारणमिदं प्रतीयते महाभारते युद्धे भूयांसो विपश्चितो हताः। अवशिष्टा विद्या कथं रक्षिता स्यादित्यासीत्तदानींतनानां विदुषां समक्षे महान् प्रश्नः। एतत्सुमहत् कार्यं तदा कृष्णद्वैपायनेनानेकेषां विदुषां सहयोगेन समपादि। यदि तस्मिन् काले कृष्णद्वैपायनो भारते यत्र तत्र प्रकीर्णाः सर्वा विद्या अष्टादशसु पुराणेषु न समग्रहीष्यत्तदैतस्य महार्घस्य साहित्यस्य भारतवर्षात् समूलोच्छेदो ऽभविष्यत्। सम्भवतो ऽस्मादेव कारणात् कृष्णद्वैपायनो व्यासोऽष्टादशपुराणानां रचयितुर्गौरवास्पदं स्थानं भजते। पुराणेषु सङ्कलनं परिवर्धनं च महाभारतोत्तरवर्तिनि काले ऽपि प्रावर्तेताम्। सम्प्रत्युपलभ्यमानेषु पुराणानां संस्करणेषु महाभारतोत्तरवर्तिनां राज्ञां वंशावलीभागाः साम्प्रदायिकविषयाः काव्यव्याकरणादयो विविधविषयाश्च सूक्ष्मेक्षिकया पर्यालोचनानन्तरं महाभारतात् पश्चाद्वर्तिनः प्रतीयन्ते। इमे खलु महाभारतकालानन्तरं व्यासोपाह्वैः प्रसिद्धैरप्रसिद्धैर्वा बहुभिर्विद्वद्भिः संशोध्य परिवर्ध्य वा संयोजिताः।

---

9 भविष्ये द्वापरे चापि द्रोणिर्व्यासो भविष्यति ।
व्यतीते मम पुत्रेऽस्मिन् कृष्णद्वैपायने मुने ।।
विष्णुपु. 3,3,21

10 द्वैपायनो ऽस्मि व्यासानां कवीनां काव्य आत्मवान् ।
भागवत. 11,16,2

एवं पुराणानां बहवः संकलनकर्तारः सम्पादका वाऽभवन् तेषु केचिद् व्यासपदवीमपि प्रापुः। एषु व्यासेषु कृष्णद्वैपायनः शिरोमणिरभवदिति युक्तं प्रतीयते।

## व्याकरणलक्षणं,संस्कृतव्याकरणानुक्रमविकासो ऽग्निपुराणवर्त्ति–व्याकरणञ्च –

### व्याकरणलक्षणम् –

व्याक्रियन्ते व्युत्पाद्यन्ते शब्दा येनेति व्युत्पत्तिरस्य शब्दस्य संस्कृतशब्दार्थकौस्तुभे प्रोक्ता।[11] इयमेव व्युत्पत्तिर्न्यायकोशे ऽपि दृश्यते।[12] अस्य शब्दस्यानया व्युत्पत्त्या तु व्याकरणेन शब्दानां व्युत्पत्तय एव बोध्यन्ते न तेषां वर्गादय इत्येवावगम्यते। परं डित्थडवित्थादयोऽनेके शब्दा न व्युत्पत्तिनिमित्ता न च तेषां कश्चिदर्थविशेषः। एवंविधेषु शब्दविशेषेषु व्याकरणशास्त्रस्या–प्रसक्तिर्जायते। व्याकरणेन तु व्युत्पन्नशब्दानामेव तत्तत्क्रियामनुरुध्य निर्वचनं विधातुं शक्यते। अव्युत्पन्नेषु च शब्देषु क्रियाया अदर्शनान्न तत्र तस्य प्रसङ्गः स्यात्। परमनेन शास्त्रेणोभयविधानामेव शब्दानां सञ्ज्ञाकारकसमासादिषु विभिन्नेषु वर्गविशेषेषु वर्गीकरणं सम्पाद्यते। अतएव येन शब्दानां व्युत्पत्तिर्वर्गीकरणं वा विधीयते तदेव व्याकरणमित्ययं विद्यते व्युत्पत्तिप्रवृत्तिनिमित्तो ऽर्थो व्याकरणशब्दस्य।

मुखं व्याकरणं स्मृतमिति प्रसिद्धोक्त्या सर्वेषु वेदाङ्गेषु व्याकरणस्य प्राधान्यं सुतरामवगम्यते। यथा हि मुखं विना भोजनादि–क्रियाणामसद्भावात्पुरुषशरीरस्यावस्थितिर्न जायते तथैव व्याकरणं विना वेदपुरुषशरीरं न रक्षयितुं शक्यत इति। वक्तुं पार्यते। वस्तुतो व्याकरणस्याध्ययनेन तदध्येतृभिः सर्वविधा विद्या याथातथ्येनावबुध्यन्ते।

---

11 संस्कृतशब्दार्थकौस्तुभः पृ.1018

12 अत्रार्थे व्युत्पत्तिः–व्याक्रियन्ते व्युत्पाद्यन्ते (अर्थवत्तया प्रतिपाद्यन्ते) शब्दा येन (करणे ल्युट्) इति व्याकरणम्।
न्यायकोशः पृ.757

संस्कृतव्याकरणानुक्रमविकासः

इतिहासात्पूर्वस्मिन् काले (प्रीहिस्टौरिकल एज) संस्कृत–भाषायाःकाचिदपराऽविदितसकलस्वरूपा भाषा प्रायुज्यतेति तुलनात्मक-भाषाविदां मतम् ।

अथ गच्छति कालेऽस्मिन् संस्कृते ब्राह्मणारण्यको–पनिषत्सूत्रवेदाङ्गरामायणमहाभारतपुराणोपपुराणानि, कपिलादिकृत साङ्ख्यादिषड्दर्शनानि, अश्वघोषकालिदासभवभूत्यादिकविकृतका–व्यग्रन्थाश्च निरमीयन्त। परमेतेषां वेदोत्तरवर्तिग्रन्थानां भाषासूत्तरोत्त–रमधिकाधिकं वैषम्यमजायत। विषमतामिमामाधृत्य संस्कृतस्य वैदिक–लौकिकाख्यौ द्वौ भेदौ विधीयेते। वैदिकसंस्कृते वेदब्राह्मणा–रण्यकोपनिषत्सूत्रवेदाङ्गानां लौकिकसंस्कृते च षड्दर्शनानां रामायणमहाभारतादीनां च भाषाया अन्तर्भावः क्रियते।

यदा वैदिकसंस्कृतं सुतरां प्रससार तदा तस्य शब्दानां सम्यगुच्चारणस्य छन्दसां च ज्ञानाय भाषाविदः प्रातिशाख्यग्रन्थान् रचयामासुः। इमे खलु वैदिकसंस्कृतस्य व्याकरणग्रन्थाआसन्। लौकिकसंस्कृतस्य चापि पाणिनिशाकटायनादिभिरनेकैर्वैयाकरणैर्बहूनि व्याकरणानि प्रास्तूयन्त।

व्याकरणशास्त्रस्य कतमः सर्वप्रथमो ग्रन्थः स च कदा विरचित इति विषये न किमपि वक्तुं पार्यते। परमिदानीं यस्मिन्नर्थे व्याकरणशब्दस्य प्रयोगस्तस्मिन्नेवार्थेऽयं यजुर्वेदेऽपि प्रयुक्तः।[13] रामायणमहाभारतादिष्वप्येष शब्दो विलोक्यते।[14]

संस्कृतव्याकरणस्यादिकालादारभ्यानुक्रमविकासः प्रदर्शयितुं न शक्यते, यतो हि प्रत्नतमानां बहूनामाचार्याणां व्याकरणानि

---

13 दृष्ट्वा रूपे व्याकरोत् सत्यानृते प्रजापतिः ।
यजुर्वेदः 19,77

14 तत्रैव पृ.44
(1) नूनं व्याकरणं कृत्स्नमनेन बहुधा श्रुतम् ।
बहु व्याहरता ऽनेन न किञ्चिदपभाषितम् ।।
रामायणम् किष्किन्धा. 3,29
(2) सर्वार्थानां व्याकरणाद् वैयाकरण उच्यते ।
तन्मूलतो व्याकरणं व्याकरोतीति तत्तथा।।
महाभारतम् उद्योगपर्वम्, 43

नेदानीमुपलभ्यन्ते। सर्वेषां ग्रन्थानां रचनाकालं विज्ञातुं न किमपि प्रामाणिकं स्रोतः । वैदिकव्याकरणविषयेऽत्र विचारो ऽप्रासङ्गिको यतो हि पुराणेषु वर्तमानं व्याकरणं प्रायशः पाणिनीयव्याकरणानुकूलमेव। पाणिनीयव्याकरणं च प्रधानतो लौकिकसंस्कृतविषयकम्। अत एवात्र लौकिकसंस्कृतस्य व्याकरणशास्त्राण्याश्रित्य विचारो विहितः।

# पुराणवर्तिव्याकरणम्

अग्निगरुडनारदीयविष्णुधर्मोत्तरपुराणेषु व्याकरणविषयिणी या सामग्री समुपलभ्यते तस्या विवरणमत्र प्रस्तूयते–

1. अग्निपुराणम् – अस्मिन् पुराणे 349 तमादध्यायादारभ्य 359 तमऽध्यायं यावद् व्याकरणविषयः प्रतिपादितः। 349 तमेऽध्याये प्रत्याहारसूत्रकसूत्राणामणादिप्रत्याहाराणां च कथनम्। 350 तमेऽध्याये संधिसिद्धरूपप्रदर्शनार्थं दण्डाग्रमित्यादयुदाहरणानां निरूपणम्। 351 तमेऽध्याये स्वादिविभक्तिनिरूपणं प्रातिपदिकस्य पुंस्त्वादिभेदेन त्रिप्रकारकत्वस्य वर्णनं वृक्षादिसिद्धरूपकथनञ्च। 352 तमेऽध्याये रमादिस्त्रीलिङ्गानां, 353 तमेऽध्याये सर्वादिसर्वनाम्नां वार्यादिनपुसंकलिङ्गानां च शब्दानां सिद्धरूपाणि । 354 तमेऽध्याये कारकाणामभिधानम्। 355 तमेऽध्याये तत्पुरुषादिसमासानाम्। 356 तमे चाध्याये तद्धितसिद्धरूपाणां कथनम्। उणादिसिद्धरूपाणि 357 तमेऽध्याये वर्णितानि। 358 तमेऽध्याये तिङ्विभक्तिसिद्धरूपाणि 359 तमे चाध्याये कृत्सिद्धरूपाण्यभिहितानि।

2. गरुडपुराणम् – इदं पुराणमग्निपुराणवत् समस्तानां विद्यानां कोशो विद्यते। अस्मिन् पुराणे 203 , 204 अध्याययोर्व्याकरणविषयो निरूपितः।

3. नारदीयपुराणम् – अस्य पुराणस्य 52 तमेऽध्याये व्याकरणं विवेचितम्।

4. विष्णुधर्मोत्तरपुराणम्– अस्य पुराणस्य तृतीयखण्डवर्तिनि तृतीयेऽध्याये व्याकरणचर्चा विहिता।

## विभक्तयः कारकाणि च

अग्निगरुडनारदीयविष्णुधर्मोत्तरपुराणेषु प्रथमादिविभक्तीनां प्रयोगस्थलानां निर्देशः प्रसादगुणोपेतशैल्या संक्षेपेण विहितः। अत्र सिद्धान्तकौमुद्यादीनां प्रक्रियाग्रन्थानां शैलीमङ्गीकृत्य विभक्तीनां प्रयोगस्थलानि विभागशः प्रदर्शितानि । प्रथमादिविभक्तीनां सामान्य–नियमानामेवात्र विधानमेतद्विषयकसूक्ष्मविवेचनस्य सर्वत्रात्यन्ताभावः।

विभक्तय :

(क) प्रथमा विभक्तिः

| पुराणम् | प्रयोगस्थलानि |
|---|---|
| 1. अग्निपुराणम् | 1. प्रातिपदिकार्थे 2. लिङ्गार्थे 3. वचनार्थे 4. सम्बोधने 5. उक्ते कर्मणि 6. उक्ते कर्तरि च।[1] |
| 2. गरुडपुराणम् | 1. प्रातिपदिकार्थे 2. सम्बोधने 3. लिङ्गादौ 4. उक्ते कर्मणि 5. उक्ते कर्तरि च।[2] |
| 3. नारदीयपुराणम् | 1. प्रातिपदिके 2. सम्बोधने 3. उक्ते कर्मणि 4.उक्ते कर्तरि च। |
| 4. विष्णुधर्मोतरपुराणम् | 1. प्रातिपदिकार्थे 2. वचनार्थे 3. परिमाणे च[3]। |

प्रथमाविभक्तेः प्रयोगस्य निर्देशविषये चतुर्णां पुराणानां वर्णन–प्रकारः सदृशः। अग्निपुराणस्य प्रथमाविभक्तेः प्रयोगस्थलनिर्देशो–ऽन्यपुराणानां निर्देशेभ्यो विपुलतमो जातः। सर्वेषु पुराणेषु प्राति–पदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमेति पाणिनीयसूत्रस्य प्रभावः स्पष्टतया संलक्ष्यते।

---

1 अग्निपु. 351, 23–24, 354,15

2 गरुडपु. 203, 2–3

3 विष्णुध. 3,3,17

(ख) द्वितीया विभक्तिः

| पुराणम् | प्रयोगस्थलानि |
| --- | --- |
| 1. अग्निपुराणम् | 1. कर्मणि 2. विनायोगे (विनाश्रीः–श्रियम्) 3. कर्मप्रवचनीययोगे (अन्वर्जनं योद्धारः) 4. अभित इत्यस्य योगे (अभितो ग्रामम्)[4] |
| 2. गरुडपुराणम् | 1. कर्मणि 2. अन्तराऽन्तरेण संयुते 3. लक्षणे 4. परिप्रत्यनुयोगे 5. हीनार्थकानुयोगे 6. उपयोगे 7. चिह्नवाचिनोऽभागार्थस्य चाभ्युपसर्गस्य योगे[5]। |
| 3. नारदीयपुराणम् | 1.कर्मणि 2. अन्तरान्तरेण संयुते 3. गतिकर्मणि चेष्टायाम् 4. मन्यकर्मण्यनादरे च[6]। |
| 4. विष्णुधर्मोत्तरपुराणम्– | 1. कर्मणि[7] |

अत्र गरुडपुराणस्य द्वितीयाया वर्णनं पृथुतरं पाणिनीय–सूत्राणां च प्रभावः सर्वेषु दृश्यते।

(ग) तृतीया विभक्ति :

| पुराणम् | प्रयोगस्थलानि |
| --- | --- |
| 1. अग्निपुराणम् | 1. तिङ्कृत्तद्धितैरनुक्ते कर्तरि कारके (लोकैर्विष्णुः सम्पूज्यते, तेन गन्तव्यम्) 2. करणे 3. हेतौ (अन्नेन वसेत्, अर्थेन भृत्यो वसेत्) |

---

4 अष्टा. 2,3, 46

5 गरुडपु. 203,4,10–11

6 नारदीयपु.पू.खं. 52,4;12

7 विष्णुध. 3,3,18

| | |
|---|---|
| | 4. पृथग्विनाद्यैर्योगे (विना श्रिया)<br>5. सहयोगे (पिता पुत्रेण सहागात्)<br>6. कुत्सितेऽङ्गे (अक्ष्णा काणः)<br>7. विशेषणे च (गदया हरिः)[8] |
| 2. गरुडपुराणम् | 1. करणे 2. कर्तरि<br>3. सहयोगे 4. कुत्सितेऽङ्गे<br>5. विशेषणे च[9]। |
| 3. नारदीयपुराणम् | 1. करणे 2. कर्तरि 3. सहयोगे<br>4. कुत्सितेऽङ्गे 5. विशेषणे च[10]। |
| 4. विष्णुधर्मोत्तरपुराणम् | 1. करणे 2. कर्मणि कारके<br>3. कर्तरि च[11]। |

अत्र गरुडनारदीये परस्परं संगच्छेते। पिता पुत्रेण सहागात्–अक्ष्णाकाणश्चेति द्वे उदाहरणे काशिकायां सिद्धान्तकौमुद्यां चापि दृश्येते[12]। अग्निपुराणस्य वर्णनं बृहत्तमम्।

(घ) चतुर्थी विभक्तिः

| पुराणम् | प्रयोगस्थलानि |
|---|---|
| 1. अग्निपुराणम् | 1. सम्प्रदाने 2. तादर्थ्ये (वृक्षाय वै जलम्) 3. नमः स्वाहास्वधा–स्वस्तिवषडाद्यैर्योगे (नमो देवाय, |

---

8 अग्निपु. 351,25; 354,14–17;19; 21–22

9 गरुडपु. 203,5;14

10 नारदीपु. 52,5; 14

11 विष्णुध. 3,3,18

12 (क) काशिका 2,3,19, सिद्धान्तकौमुदी कारकप्रकरणम् 818
(ख) काशि. 2,3,20 सि.कौ.का कारकप्रकरणम् 820

| | |
|---|---|
| | ते स्वस्ति) 4. भाववाचिनि तुमर्थे (पाकाय पक्तये याति)[13] |
| 2. गरुडपुराणम् | 1. सम्प्रदाने 2. रुच्यर्थे 3. गतिकर्मणि चेष्टायाम् 4. अप्राणे मन्यकर्मण्यनादरे 5. नमःस्वस्तिस्वधास्वाहालंवषड्-योगे 6. तादथ्र्ये 7. भाववाचिनि तुमर्थे च[14]। |
| 3. नारदीयपुराणम् | 1. सम्प्रदाने 2. रुच्यर्थे 3.गति-कर्मणि चेष्टायाम् 4. अप्राणिषु मन्यकर्मण्यनादरे 5. नमः स्वस्ति-स्वाहास्वधाऽलंवषड्योगे । 6. तादर्थ्ये 7. भाववाचिनि तुमर्थे च[15]। |
| 4. विष्णुधर्मोत्तरपुराणम् | 1. सम्प्रदाने[16] |

अत्रापि गरुडनारदीययोः समत्वम्। नमो देवायेति पाकाय यातीति चोदाहरणद्वयं काशिकायामपि किञ्चिद्भिन्नत्वेनोपलभ्यन्ते।[17] गरुडनारदीयपुराणयोरस्यां विभक्तेः सविस्तरं वर्णनम् ।

(ङ) पञ्चमी विभक्तिः

| | पुराणम् | प्रयोगस्थलानि |
|---|---|---|
| 1. | अग्निपुराणम् | 1. अपादाने 2. पर्युपाङ्मुखै-र्योगे(परिग्रामाद् देवोऽयं वृष्टः) |

---

13 अग्निपु.351,26; 358,16; 20;21

14 गरुड. 203,6,13

15 नारदीय.पू.खं. 52,6,12–13

16 विष्णुधर्मोत्तरपुराणम् 3,18

17 काशिका 2,3,16 नमोदेवेभ्यः, काशिका 2,3,15 पाकाय व्रजसि

| | |
|---|---|
| | 3. ऋतेयोगे इतरयोगे च (ऋते विष्णोः, हरेरितरः) 4. पृथग्वि– नाद्यैर्योगे (पृथग् ग्रामात्, श्रियो विना)[18] |
| 2. गरुडपुराणम् | 1. अपादाने 2. भयहेतौ 3. ईप्सितानीप्सितरक्षार्थानां प्रयोगे 4.पर्यपाङ्योगे 5.इतरर्तेऽन्यदिक्– प्रभृतियोगे च।[19] |
| 3. नारदीयपुराणम् | 1. अपादाने कारके 2. भयहेतौ 3. ईप्सितानीप्सितरक्षार्थानां प्रयोगे 4. पर्युपाङितरर्तेदिङ्मुखे च।[20] |
| 4. विष्णुधर्मोत्तरपुराणम् | 1. अपादाने।[21] |

गरुडनारदीययोरत्र वर्णनसाम्यम्। 'ऋते विष्णोरिति हरेरितर इति चोदाहारणद्वयं सिद्धान्तकौमुद्याः पर्यायवाचिना कृष्णशब्देन सह सङ्गच्छते।[22]

(च) षष्ठी विभक्तिः

| पुराणम् | प्रयोगस्थलानि |
|---|---|
| 1. अग्निपुराणम् | 1. स्वस्वामिभावेश्वराधिपतिसाक्षि– सूतदायादार्थेषु (नृणां स्वामी, नृणामीशः, सतां पतिः, नृणां साक्षी, गवां पतिः गवां सूतः, गवां दायादः) |

---

18 अग्नि. 351,27; 354,16;17–18

19 गरुडपु. 203,7, 9–10

20 नारदीयपु.पू.खं. 52,7, 9–10

21 विष्णुध. 3,3,19

22 सिद्धान्तकौ. 871, इतरः कृष्णात्, ऋते कृष्णात्

2. अनभिहिते कर्मणि (तस्य गन्तव्यम्) 3. हेतौ (अन्नस्य हेतो र्वसति) 4. स्मृत्यर्थकर्मणि (मातुः स्मरति) 5. कृद्योगे कर्तृकर्मणोश्च (अपां भेत्ता, तव कृतिः)[23]

2. गरुडपुराणम्

1. स्वस्वामिसम्बन्धमुख्यके 2. स्वामीश्वराधिपतिभिः साक्षाद्–दायादसूतकैर्योगे 3. निर्धारणे 4. हेतुप्रयोगे 5. स्मृत्यर्थकर्मणि 6. करोतेः प्रतियत्नके 7. हिंसार्थानां प्रयोगे 8. कर्तृकर्मणोः कृति।[24]

3. नारदीयपुराणम्

1.स्वस्वामिसम्बन्धे 2.स्वामीश्वराधि–पत्यादीनां योगे 3. निर्धारणे 4. हेतुप्रयोगे 5.स्मृत्यर्थकर्मणि 6.प्रतियानकेऽर्थे करोतेः प्रयोगे 7.हिंसार्थानां प्रयोगे 8. कृति परतः कर्तरि कर्मणि च।[25]

4. विष्णुधर्मोत्तरपुराणम्

1. सम्बन्धे।[26]

अत्रापि गरुडनारदीयपुराणयोर्वर्णनप्रकारे सर्वथा साम्यम्। अन्नस्य हेतोर्वसतीत्युदाहरणं काशिकायां सिद्धान्तकौमुद्यामपि दृश्यते। मातुः स्मरतीत्यपि काशिकायामवैकल्येन सिद्धान्तकौमुद्यां च किञ्चित्परिवर्तनेनोपलभ्यते।[27]

---

23 अग्निपु. 351,27; 354,14; 23–26

24 गरुड. 203, 8,14–17

25 नारदीय. पू.खं. 52,8,14–17

26 विष्णुध. 3,3,19

27 काशिका 2,3,26, सि.कौ. 889
काशि० 2,3,52 सि.कौ. 896 मातुः स्मरणम्

(7) सप्तमी विभक्तिः

| पुराणम् | प्रयोगस्थलानि |
|---|---|
| 1. अग्निपुराणम् | 1. अधिकरणे 2. काले भावे च (विष्णौ नते मुक्तिर्भवेत्, वसन्ते स हरिं गतः) 3. स्वस्वाम्यादौ च (नृषु स्वामी, नृषु साक्षी, गोषु नाथः गोषु सूतः) [28] |
| 2. गरुडपुराणम् | 1. अधिकरणे 2. काले भावे च 3. स्वामीश्वराधिपतिभिः साक्षाद् दायादसूतकैश्च योगे 4. निर्धारणे च।[29] |
| 3. नारदीयपुराणम् | 1. अधिकरणे 2. काले भावे च 3. स्वामीश्वराधिपतिभिः साक्षि–दायादसूतकैर्योगे 4. निर्धारणे च।[30] |
| 4. विष्णुधर्मोतरम् | आधारे भावे च।[31] |

अत्रापि गरुडनारदीययोर्मध्ये पूर्णसाम्यम्।

कारकाणि

अग्निगरुडनारदीयपुराणेष्वेव कारकविषये वर्णनं विष्णुधर्मोत्तरे न किमप्युक्तम्।

---

28 अग्नि. 351, 28; 354, 22
29 गरुडपु. 203,8,14–15
30 नारदीयपु.पू.खं. 52,8,14–15
31 विष्णुधर्मो. 3,3,19

| (1) कर्तृकारकम् | लक्षणमुदाहरणानि च |
|---|---|
| 1. अग्निपुराणम् | कर्ता यश्च करोति सः। स च पञ्चविधः – 1. स्वतन्त्रःकर्ता (विद्यानां कृतिनः समुपासते) 2. हेतुकर्ता (हितं लम्भयते) 3. कर्मकर्ता (प्राकृतधीः स्वयं भिद्यते) तरुः स्वयं छिद्यते 4. अभिहितकर्ता (इह ग्रामोऽस्ति) 5. अनभिहितकर्ता (धर्मः शिष्ये व्याख्यायते)[32] |
| 2. गरुडपुराणम् | कर्ता यश्च करोति सः।[33] |
| 3. नारदीयपुराणम् | स कर्ता स्यात् करोति यः।[34] |

अग्निगरुडपुराणयोः कर्तृलक्षणे सदृशे एव । नारदीयपुराणस्य लक्षणे तु शब्दभेदमात्रमेव।

(2) कर्मकारकम्

| पुराणम् | लक्षणमुदाहरणानि च |
|---|---|
| 1. अग्निपुराणम् | कर्म यत्क्रियते तत्स्यात्। इदं च सप्तविधम्– 1. ईप्सितं कर्म (श्रद्दधाति हरिं यतिः) 2. अनीप्सितं कर्म (अहिं भृशं लङ्घयते) 3.नेप्सितं नानीप्सितम् (दुग्धं सम्भक्षयन् रजः) 4. |

32 अग्नि. 351,25; 354.1–4

33 गरुडपु. 203,5

34 नारदीयपु.पू.खं. 52,5

| | |
|---|---|
| | अकथितम् (गोपालो गां पयो दोग्धि) 5. कर्तृकर्म (गुरुः शिष्यं ग्रामं गमयेत्) 6. अभिहितं कर्म (श्रिये वै हरेः पूजा क्रियते ) 7. अनभिहिते च कर्म (हरेः सर्वदं स्तोत्रं कुर्यात्)।[35] |
| 2. गरुडपुराणम् | तत्कर्म क्रियते च यत्।[36] |
| 3. नारदीयपुराणम् | तत्कर्म क्रियते च यत्।[37] |

अत्र सर्वेषु लक्षणेषु पूर्णं साम्यम् । गां दोग्धि पयः इत्युदाहरणं काशिकायां सिद्धान्तकौमुद्यान्चोपलभ्यते।[38]

(3) करणकारकम्

| पुराणम् | लक्षणमुदाहरणनि च |
|---|---|
| 1. अग्निपुराणम् | क्रियते येन करणम्। एतद् द्विविधम्–1.बाह्यम् (दात्रेण तल्लुनेत्) 2. आभ्यन्तरञ्च (चक्षुषा रूपं गृह्णाति)[39] |
| 2. गरुडपुराणम् | येन क्रियते तत्करणम्।[40] |
| 3. नारदीयपुराणम् | येन क्रियते तत्करणम्।[41] |

---

35 अग्निपु. 351,24, 354,4–8
36 गरुडपु. 203,4
37 नारदीयपु.पू.खं. 52,4
38 काशिका 1,4,41; सि.कौ.776 श्लोकः
39 अग्निपु. 351,25, 354,8–9
40 गरुडपु. 203, 5.
41 नारदीयपु.पू.खं. 52,5

करणलक्षणेष्वत्र पूर्णसाम्यम्। दात्रेण तल्लुनेदित्युदाहरणं काशिकायामपि किञ्चित्परिवर्तनेन।[42]

(4) सम्प्रदानकारकम्

| पुराणम् | लक्षणमुदाहरणानि च |
|---|---|
| 1. अग्निपुराणम् | यस्मै दित्सां धारयते सम्प्रदानं तदीरितम्। एतत्त्रिविधम्– 1. प्रेरकम् (ब्राह्मणाय गां ददाति) 2. अनुमन्तृकम् (नरो नृपतये दासं ददाति अनुमननम्–आज्ञा पालनम्) 3. अनिराकर्तृकम् (सज्जनो भर्त्रे पुष्पाणि दद्यात् अनि–राकरणमादरभावः)[43] |
| 2. गरुडपुराणम् | यस्मै दित्सा धारयते रोचते सम्प्रदानकम्।[44] |
| 3. नारदीयपुराणम् | यस्मै दित्सां धारयद्वै रोचते सम्प्रदानकम्।[45] |

अत्र पुराणत्रयस्य लक्षणानि परस्परं संवदन्ति। ब्राह्मणाय गां ददातीत्युदाहरणवद् विप्राय गां ददातीत्युदाहरणं सिद्धान्तकौमुद्यामप्युपलभ्यते।[46]

5. अपादानकारकम्

| पुराणम् | लक्षणमुदाहरणानि च |
|---|---|
| 1. अग्निपुराणम् | अपादानं यतोऽपैति आदत्ते च भयं यतः। एतद् द्विविधम् 1. |

---

42 काशिका 2,3,18 दात्रेण लुनाति

43 अग्निपु. 351,26, 354,9–10

44 गरुडपु. 203,4

45 नारदीयपु.पू.खं. 52, 6

46 सि.कौ. 828 विप्राय गां ददाति

| | |
|---|---|
| | चलम् (धावतोऽश्वात् पतितः) 2. अचलम् (स वैष्णवो ग्रामादागच्छति)।[47] |
| 2. गरुडपुराणम् | यतोऽपैति समादत्ते अपादत्ते भयं यतः।[48] |
| 3. नारदीयपुराणम् | यतोऽपैति समादत्ते अपादत्ते च यं यतः।[49] |

अष्टाध्याय्यां जायमानस्यार्थस्य प्रकृतेरपादानसञ्ज्ञा निर्दिष्टा तस्याञ्च पञ्चमी।[50] परं वसुदेवस्य देवक्यां जात इत्यत्र सप्तमी। पाणिनिमतेनात्र वसुदेवस्य देवक्या इति रूपं स्यात्।

6. कृतोपनयनः सम्यग्ब्रह्मचारी गुरोर्गृहे।
वसते तत्र धर्मोऽस्य कथ्यते तन्निबोध मे।।[51]

अष्टाध्याय्यामुपयोगे (नियमपूर्वकविद्यास्वीकारे) अर्थे ह्याख्यातुरपादानसंज्ञा प्रोक्ता तत्र च पञ्चम्याः प्रयोगः।[52] परं तन्निबोध म इत्यत्र षष्ठी प्रयुक्ता। पाणिनिमतेनात्र तन्निबोध मदिति रूपं स्यात्।

षष्ठी विभक्तिः–

1. सुहृदो ज्ञातयः पुत्रा भ्रातरः पितरावपि।
नानुस्मरन्ति स्वजनं यस्य दैवमदक्षिणम्।।[53]

---

47 अग्निपु. 351,27, 354,11
48 गरुडपु. 203,7
49 नारदीयपु.पू.खं. 52,7
50 जनिः कर्तुः प्रकृतिः। अ. 1,4,30; भागवतपु. 1.1.12
51 मार्कण्डेयपु. 25,11
52 आख्यातोपयोगे। अ. 1,4,29
53 भागवतपु. 10,82,20

अष्टाध्याय्यां स्मरणार्थानां धातूनां कर्मणि षष्ठी निर्दिष्टा।[54] परं नानुस्मरन्ति स्वजनमित्यत्र द्वितीया प्रयुक्ता। पाणिनिमतेनात्र नानुस्मरन्ति स्वजनस्येति रूपमपि सम्भवेत्।

2. अयाजयद्धर्मसुतमश्वमेधैस्त्रिभिर्विभुः।
सोऽपि क्ष्मामनुजै रक्षन् रेमे कृष्णमनुव्रतः।।[55]

अष्टाध्याय्यां शेषे (स्वस्वामिभावसम्बन्धे) षष्ठी प्रोक्ता।[56] परं रेमे कृष्णमनुव्रतः इत्यत्र द्वितीया। पाणिनिमतेनात्र रेमे कृष्णस्यानुव्रतः इति रूपं स्यात्।

3. त्वन्मुखाद् ब्राह्मणास्त्वत्तो बाहोः क्षत्रमजायत।
वैश्यास्तवोरुजाः शूद्रास्तव पद्भ्यां समुद्गताः।।[57]

अत्र पुराणत्रयस्य लक्षणेषु पूर्णसाम्यम्। धावतोऽश्वात् पतित इत्युदाहरणं केवलं सिद्धान्तकौमुद्यां ग्रामादागच्छतीति चोदाहरण–

मुभयोर्ग्रन्थयो र्विलोक्यते।[58]

(6) अधिकरणकारकम्

| पुराणम् | लक्षणमुदाहरणानि च |
| --- | --- |
| 1. अग्निपुराणम् | आधारो योऽधिकरणम् । एतच्चतुर्विधम् – 1. व्यापकम् (दध्नि घृतम्) 2. औपश्लेषिकम् |

---

54 अधीगर्थदयेशां कर्मणि। अ. 2,3,52

55 भागवतपु. 3,3,18

56 षष्ठी शेषे। अ. 2,3,50

57 विष्णुपु. 1,12,63–64

58 (कः) सिद्धान्तकौ. 857, ग्रामादायाति, धावतोऽश्वात् पतितः।
(खः) काशिका 2,3,28

(तिलेषु देवार्थतैलम्) 3. वैषयिकम् (गृहे तिष्ठेत्, वृक्षे कपिः) 4. सामीप्यकम् (गङ्गायां घोषो वसति)[59]

2. गरुडपुराणम् आधारश्चाधिकरणम्।[60]

नारदीयपुराणे नास्य लक्षणम्।

अग्निगरुडपुराणयोर्लक्षणयोः साम्यम्। अधिकरणस्याभिव्या–पकौपश्लेषिकवैषयिकाख्यास्त्रयो भेदाः सिद्धान्तकौमुद्यामपि दृश्यन्ते।[61]

कारकाणामपवादाः

यद्यपि पुराणेषु कारकाणां प्रयोगाः पाणिनीयव्याकरण–नियमाननुसृत्य विहिताः परं क्वचित्क्वचिदिमे नियमा नानुमताः। एतादृशाः प्रयोगा अत्र अपवादसञ्ज्ञया व्यवहृताः। अग्निपुराणे त्वेषामपवादानां सङ्ख्या न्यूनतरा परमन्येषु विष्णुभागवतमार्कण्डेय–पुराणेष्वेते बाहुल्येनोपलभ्यन्ते। केचनापवादा अधस्तात् प्रस्तूयन्ते।

कर्तृकारकम्

1. मालत्यदर्शि वः कच्चिन्मल्लिके जातियूथिके।
प्रीतिं वो जनयन् यातः करस्पर्शेन माधवः।।[62]

अष्टध्याय्यां कर्तरि प्रथमा वा तृतीया वा विभक्ति र्निदिष्टा।[63] परमदर्शि वः कच्चिदित्यत्र कर्तृकारके षष्ठ्याः प्रयोगः। पाणिनिमतेनात्र यूयमद्राष्टेति युष्माभिरदर्शीति वा रूपं स्यात्।

---

59 अ.पु. 351,28, 354,12–14
60 गरुडपु. 203,9
61 सि.कौ. 927
62 भागवतपु० 10, 30, 8
63 (क) प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा। अष्टा. 2,3,46

कर्मकारकम्

1. हंसकुन्देन्दुधवलं नीलाम्बरधरं द्विजं।
तस्यानु बलभद्रं च ददर्श यदुनन्दनम्।।[64]

अष्टाध्याय्यामनोः कर्मप्रवचनीयसंज्ञा तद्योगे च द्वितीया निर्दिष्टा।[65] परं तस्यान्वित्यत्र षष्ठी। पाणिनिमतेनात्र तमन्विति रूपं स्यात्।

2. ज्ञानप्रवृत्तिनियमैक्यमयाय पुंसो
भोगप्रदानपटवे त्रिगुणात्मकाय।
अव्याकृताय भवभावनकारणाय
वन्दे स्वरूपभवनाय सदाऽजराय।।[66]

अष्टाध्याय्यां कर्मणि द्वितीया प्रोक्ता।[67] परं स्वरूपभवनाये–त्यत्र चतुर्थ्याः प्रयोगः। पाणिनीयमतेनात्र स्वरूपभवनमिति रूपं स्यात्।

करणकारकम्

1. अग्न्यादिभिर्न हन्येत मुनेर्योगमयं वपुः।
मद्योगश्रान्तचित्तस्य यादसामुदकं यथा।।[68]

अष्टाध्याय्यां करणकारके तृतीया निर्दिष्टा[69] परं यादसां (वपुः) उदकं यथेत्यत्र करणे प्रथमा पाणिनिमतेनात्र यादसां (वपुः) उदकेनेति रूपं स्यात्।

2. यथोर्णनाभिर्हृदयादूर्णां सन्तत्य वक्त्रतः।
तथा विहृत्य भूयस्तां ग्रसत्येवं महेश्वरः।।[70]

---

(ख) कर्तृकरणयोस्तृतीया। अ. 2,3,18

64 विष्णुपु. 5,17,23

65 अनुर्लक्षणे। अ. 1,4,84; कर्मप्रवचनीययोगे द्वितीया। अ. 2,3,8

66 विष्णुपु. 6,8,61

67 कर्मणि द्वितीया अ. 2,3,2

68 भागवतपु. 11,15,29

69 कर्तृकरणयोस्तृतीया। अ. 2,3,18

पाणिनिना करणे तृतीया विभक्तिः प्रोक्ता। परमूर्णां सन्तत्य वक्त्रतः इत्यत्र करणे पञ्चमी दृश्यते। पाणिनिमतेनात्र ऊर्णां सन्तत्य वक्त्रेणेति रूपं स्यात्।

3. नामवर्णैः समैः काणो वामेऽक्ष्णि विषमैः पुनः।
दक्षिणाक्षि भवेत् काणं स्त्रीपुंनामाक्षरस्य च।।[71]

अष्टाध्याय्यां येन विकृतेनाङ्गेनाङ्गिनो विकारो लक्ष्यते तत्र तृतीयोक्ता।[72] परं नामवर्णैः समैः काणो वामेऽक्ष्णीत्यत्र सप्तमी। पाणिनिमतेन काणो वामेनाक्ष्णेति रूपं स्यात्।

सम्प्रदानकारकम्

1. अधो दत्त्वा सुवर्णं तु तत्त्वभूतं घटं न्यसेत्।
गुर्वादौ दक्षिणां दद्याद् ब्राह्मणादेश्च भोजनम्।।[73]

अष्टाध्याय्यां सम्प्रदाने चतुर्थी प्रोक्ता।[74] परं गुर्वादौ दक्षिणां दद्याद् ब्राह्मणादेश्च भोजनमित्यत्र सप्तमीषष्ठ्यौ प्रयुक्ते। पाणिनिमतेनात्र गुर्वादये दक्षिणां दद्यादिति ब्राह्मणादये च भोजनमिति च रूपे स्याताम्।

2. सुरामांसोपहारैश्च भक्ष्यभोज्यैश्च पूजिता।
नृणामशेषकामांस्त्वं प्रसन्ना सम्प्रदास्यति।।[75]

अष्टाध्याय्युक्तविधिना ऽत्रापि चतुर्थ्याः स्थानम्। परं नृणामशेषकामांस्त्वं प्रसन्ना सम्प्रदास्यतीत्यत्र षष्ठी प्रयुक्ता।

---

70 भागवत पु. 11,9,21
71 अग्निपु. 142,3
72 येनाङ्गविकारः। अ. 2,3,20
73 अग्निपु. 61,12
74 चतुर्थी सम्प्रदाने। अ. 2,3,13
75 विष्णुपु. 5,1,85

4. उत्तरं यत्समुद्रस्य हिमाद्रेश्चैव दक्षिणम्।
वर्षं तद् भारतं नाम भारती यत्र सन्ततिः।।[89]

अष्टाध्याय्यां दिक्शब्दयोगे पञ्चमी निर्दिष्टा परमुत्तरं यत्समुद्रस्येत्यत्र षष्ठी प्रयुक्ता।[90] पाणिनिमतेनात्रोत्तरं यत्समुद्रादिति रूपं स्यात्।

5. सूत जानासि भद्रं ते भगवान् सात्वतां पतिः।
देवक्यां वसुदेवस्य जातो यस्य चिकीर्षया।।[91]

अष्टाध्याय्यां जायमानस्यार्थस्य प्रकृतेरपादानसञ्ज्ञा निर्दिष्टा। अष्टाध्याय्यां शेषे षष्ठी प्रोक्ता। परं त्वत्तो बाहोः क्षत्रमजायतेत्यत्र पञ्चमी प्रयुक्ता। पाणिनिमतेनात्र तव बाहोः क्षत्रमजायतेति रूपं स्यात्।

अधिकरणकारकम्

अस्य कारकस्यापवादाः प्रायशः सप्तम्या लुग् रूपेणोपलभ्यन्ते।

1. तद्वै धनुस्त इषवः स रथो हयास्ते
सोऽहं रथी नृपतयो यत आनमन्ति।
सर्वं क्षणेन तदभूदसदीशरिक्तं
भस्मन् हुतं कुहकराद्धमिवोप्तमूष्याम्।।[92]

अष्टाध्याय्यामधिकरणे सप्तमी निर्दिष्टा।[93] परं भस्मन् हुतमित्यत्र सप्तम्या लुग् दृश्यते। पाणिनीयलौकिकव्याकरणानुसारमत्र

---

89 विष्णुपु. 2,3,1

90 अन्यारादितरर्तेदिक्शब्दा. अ. 2,3,29

91 भागवतपु. 1,1,12

92 भागवतपु. 1,15,21

93 सप्तम्यधिकरणे च। अ. 2,3,36

भस्मनि हुतमिति रूपं स्यात्।[94] वेद एव सुपां लुग्जायते न तु लोके।[95]

2. जन्माद्यस्य यतोऽन्वयादितरतश्चार्थेष्वभिज्ञः स्वराट्
तेन ब्रह्म हृदा य आदिकवये मुह्यन्ति यत्सूरयः।
तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गोऽमृषा
धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि।।[96]

अष्टाध्याय्यामधिकरणे सप्तमी प्रोक्ता।[97] परं मुह्यन्ति यत्सूरय इत्यत्र द्वितीया प्रयुक्ता । यद्यत्र सप्तम्या लुग्जात इति स्वीक्रियते तन्नोपपन्नं वेद एव तद् दृष्टत्वात् । पाणिनीयलौकिकव्याकरण–नियमेनात्र मुह्यन्ति यस्मिन् (यत्र वा) सूरय इति रूपं स्यात्।

समीक्षणम्

पुराणानां बहुषु स्थलेषु एवंविधाः प्रयोगा अपि दृष्टिपथं समायान्ति येषु हि तत्तत्कारकाणां कृते वक्तुर्विवक्षा तावदसन्दिग्धतया प्रतीयते परं तत्सम्बद्धास्तत्तद्विभक्तयो न तत्र व्यवहृता दृश्यन्ते । तासां स्थाने तु तद्भिन्नानामन्यासां विभक्तीनां प्रयोगो दृश्यते। एतादृशाः प्रयोगा अत्र कारकाणानामपवादत्वेन व्यपदिष्टाः।

पाणिनिव्याकरणे विवक्षाधीनानि कारकाणि भवन्तीति सिद्धान्तः कारकाणां व्यवहारे प्रमाणीक्रियते। अस्येदं तात्पर्यम्–वक्ता हि स्वविचाराभिव्यक्तये यथाभिलषितं किमपि कारकं प्रयोक्तुमर्हति। यदि तस्मै कस्यचित्कारकविशेषस्य प्रयोगो न रोचते तर्हि स सम्बन्धमात्रविवक्षायाम् (षष्ठी शेषे इति सूत्रमनुरुध्य) षष्ठीं प्रयुङ्क्ते। एतेन नियमेन कारकाणां प्रयोगविषयेऽन्यतमेयं व्यवस्थाऽपि सञ्जाता यदि कश्चिद् वक्ता कस्मिंश्चिद् वाक्यविशेषे सम्वन्धमात्रं वक्तुमीहेत तर्ह्यसौ सम्प्रदानापादानादिकारकेषु प्रयोक्तव्यानां चतुर्थीपञ्च–म्यादिविभक्तीनां स्थाने षष्ठीमपि व्यवहर्तुं शक्नुयात् । संस्कृ

94 हलदन्तात् सप्तम्याः सञ्ज्ञायाम्। अ. 6,3,8

95 सुपां सुलुक्पूर्वसवर्णा. अ. 8, 1, 39

96 भागवतपु. 1,1,1,

97 अष्टाध्यायी 2, 3, 50

तवाङ्मयस्य पुरातनानां रामायणमहाभारतपुराणादिग्रन्थानां वहुषु स्थलेष्वेषनियमोऽनुमतो यतो हि तत्रेदृशाः प्रयोगा अप्युपलभ्यन्ते। अधुना षष्ठ्या एवंविधाः प्रयोगाः पाणिनीया उत वा ऽपाणिनीया इति प्रश्नो नः समक्षं समायाति। प्रश्नस्य तावदिदमुत्तरम्–यद्येतादृशेषु स्थलेषु वक्तुरपादानादिकारकाणां विवक्षा स्यात् तदानीमेवेमेऽपाणिनीयाः स्युरन्यथा तेष्वपाणिनीयत्वस्य प्रसक्ति र्न स्यात्। कारकाणां विवक्षा तत्तत्स्थलेषु विद्यते न वेति विनिर्णयो व्यवहारानुरोधेनैव विधातुं शक्यते। पुराणानामपि स्थलविशेषेषु प्रयुज्यमाना षष्ठी तत्र सम्बन्धमात्रमभिसूचयति। अस्मादेवंविधाः प्रयोगा अपाणिनीया इति व्यपदेशमधिगन्तुं नार्हन्ति।

सम्बन्धमात्रविवक्षायां षष्ठी प्रयोगविषयककतिपयनिदर्शनान्यत्र पुराणत्रयेभ्यः सङ्कलय्य प्रदर्शिताः। एतादृशेषु स्थलेषु कर्तृकर्मादौ प्रथमादयो विभक्तयोऽपि प्रयोक्तुं शक्यन्ते। यद्यप्येवंविधानि निदर्शनानि कारकाणामपवादा न सन्ति तथापि सर्वासां विभक्तीनां स्थाने सम्बन्धमात्रविवक्षातो यदि सर्वत्र षष्ठ्येव प्रयुज्येत तर्ह्यन्यासां प्रथमादीनां कृते न किमपि प्रयोगस्थानमवशिष्येत। एतेन खलु पाणिनिप्रोक्तकर्त्रादिकारकाणां नैष्फल्यं जायेत। अस्माद्धेतोरपवाद इतिसञ्ज्ञाया अनधिकारिणः सन्तोऽप्येतादृशाः प्रयोगा अत्र कारकाणामपवादानां मध्ये प्रदर्शिताः। दैनन्दिने व्यवहारे षष्ठीविभक्तेः प्रयोगः प्रायशः सर्वासु विभक्तिषु कारकेषु वा संलक्ष्यते। ममेदं दुग्धमित्यस्य वाक्यस्यानेकेऽर्थाः संलक्ष्यन्ते। 1. अहमिदं दुग्धं पातुमिच्छामि 2. मह्यं दुग्धं देहि इत्यादि । यथा वेदेषु तावत्सर्वाः विभक्तयः सर्वासां विभक्तीनामर्थेषु प्रयुज्यन्ते तथा लोकेऽप्येष नियमो यत्र तत्र द्रष्टुं शक्यते।

## सन्धयः

अग्निगरुडनारदीयपुराणेष्वेव सन्धिविषये विचारः विहितः। विष्णुधर्मोत्तरपुराणे न किमप्येतद्विषयकं विवेचनमुपलभ्यते। पुराणत्रये–ऽधोलिखितप्रकारकाः सन्धयो व्याख्याताः ।

स्वरसन्धिः

1. अग्निपुराणम् सवर्णदीर्घसन्धिः (दण्डाग्रम्), गुणसन्धिः(तवेदम्), वृद्धिसन्धिः(सैषा, तवौदनम्), यण्सन्धिः (व्यसुधीः वस्वलम्), अयाद्यादेशाः (नायकः, तयिह, त इह), पूर्वरूपसन्धिश्च (तेऽत्र)[98]

2. गरुडपुराणम् दीर्घसन्धिः(विप्राग्रम्), गुणसन्धिः(गङ्गोदकम्) यण्सन्धिः (वध्वासनम्), अयाद्यादेशः (नायकः)[99]

3. नारदीयपुराणम् दीर्घसन्धिः (दण्डाग्रम्), गुणसन्धिः(गङ्गोदकम्), वृद्धिसन्धिः (सौकारः स+औ), यण्सन्धिः (वध्वासनम्), एच्सन्धिः (नायकः), पूर्वरूपसन्धिः (हरेऽव)[100]

एवं प्रमुखतमानां स्वरसन्धीनां सिद्धरूपाण्येषु पुराणेषूपलभ्यन्ते।

स्वरसन्धौ प्रकृतिभावः

1. अग्निपुराणम् ओदन्तस्य निपातस्य (अहो एहि), प्रगृह्यसञ्ज्ञायाम् (कवी एतौ), अदसोमादीदूतोः (अमी एते)[101]

2. गरुडपुराणम् एकाचो निपातस्य (अ अवेहि), प्रगृह्यसंञ्ज्ञायाम् (पटू इमौ), अदसोमादीदूतोः (अमी अश्वाः)[102]

---

98 अग्निपु॰ 349, 1–7
99 गरुडपु॰ 204, 1–4
100 नारदीयपु॰पू॰ख॰ 52, 24–28
101 अग्निपु॰ 350, 4–5
102 गरुडपु॰ 204, 4–5

| | |
|---|---|
| 3. नारदीयपुराणम् | प्रगृह्यसञ्ज्ञायां (शौरी एतौ) एकाचो निपातस्य (आ एवम्)[103] |

व्यञ्जनसन्धिः

| | |
|---|---|
| 1. अग्निपुराणम् | पदान्ते झलां जशादेशः (अच्+एक+मातृकः= अजैकमातृकः) यरोऽनुनासिकः (वाग्+ मनसम्=वाङ्मनसम्), शस्य छादेशः (तत्+शरीरकम्= तच्छरीरकम्), तवर्गस्य छादेशः (तत्+लुनाति=तल्लुनाति), स्तोःश्चुत्वादेशः(तत्+चरेत्= तच्चरेत्), स्तोः ष्टुत्वादेशः (भवान्+डीनः= भवाण्डीनः),ङमुडागमः(कुङ्+आस्ते=कुङ्ङास्ते), नकारस्य सादेशः पूर्वस्वरानुनासिकस्यानुस्वारः (भवान्+ चरन्=भवांश्चरन्), मकारस्यानुस्वारः(त्वम्+ भर्ता=त्वं भर्ता)[104] |
| 2. गरुडपुराणम् | अवसाने झलां जशादेशः (षष्+ अत्र=षडत्र) यरोऽनुनासिकः (तद्+न=तन्न), हकारस्य ढकारः (षड्+ हलानि = षड् ढलानि), तकारस्य चकारः(तत्+चरेत्= तच्चरेत्) तकारस्य लकारः (तत्+लुणाति = तल्लुणाति), ङमुडागमः(पचन्+ |

---

103 नारदीयपु॰ पू॰ख॰ 52, 28–29

104 अग्निपु॰ 350, 6–9

अत्र=पचन्नत्र), नकारस्य सकारादेशः पूर्वस्वरानुनासिकस्य चानुस्वारः (भवान्+तरति=भवांस्तरति) स्तोः ष्टुत्वम् (भवान्+डीनम् =भवाण्डीनम्)[105]

3. नारदीयपुराणम्

झलां जशादेशः (षट + अत्र = षडत्र),अनुस्वारस्य परसवणा– नुनासिकादेशः (षड् + मातरः= षण्मातरः), हकारस्य घादेशः (वाक् + हरिः वाग्घरिः), स्तोः श्चुत्वादेशः (हरिस् + शेते हरिश्शेते),शकारस्य छादेशः(तत्+शेषः =तच्छेषः), श्चुत्वनिषेधः (प्रश्+नः=प्रश्नः), ष्टुत्वादेशः (हरिस्+षष्ठः=हरिष्षष्ठः), तवर्गस्य षकारनिषेधः (भवां+षष्ठः=भवां षष्ठः) ष्टुत्वनिषेधः (षट्ःसन्तः=षट्सन्तः), षट्+ते षट्ते तवर्गस्य लकारादेशः(तत्+लेपः=तल्लेपः) नकारस्य छादेशः पूर्वस्वरस्य चानुनासिकादेशः (चक्रिन्+छिन्धि=चक्रिंछिन्धि), विकल्पेन शकारस्य छादेशः (भवान्+शौरिः=भवाञ्छौरिः =भवाञ्शौरिः), ङमुडागमः (सम्यङ्+अनन्तः=सम्यङ्ङनन्तः)

105 गरुडपु० 204, 5–7

| | | |
|---|---|---|
| | | ह्रस्वस्य तुगागमः (अङ्ग+छाया=अङ्गच्छाया) मकारस्यानुस्वारः(कृष्णम्+वन्दे = कृष्णंवन्दे),अपदान्तस्य नकारस्यानुस्वारः(तेजा+न्+सि=तेजांसि)[106] |

## विसर्गसंन्धिः

| | |
|---|---|
| 1. अग्निपुराणम् | विसर्जनीयस्य सकारः (कः + छिन्द्यात्=कश्छिन्द्यात्), विसर्जनीयस्य जिहवामूलीयम् (कः+खनेत्=कᳵखनेत्), विसर्जनीयस्योपध्मानीयम् (कः+पठेत्=कᳵपठेत्), विसर्जनीयस्य विकल्पेन शरादेशः (कः+श्वशुरः=कश्श्वशुरः, कः श्वशुरः), रुत्वे सत्युकारादेशः (कः+अत्र=कोऽत्र), रुत्वे सति यकारादेशस्तस्य लोपश्च (कः+उत्तमः= क उत्तमः, देवाः+एते=देवा एते), रकारस्य विसर्जनीयम् (सुपूः) सकारस्य रुत्वम्(वायुस्+याति वायुर्याति), एतत्तदोः सुलोपः (एषस्+ याति = एष याति)[107] |
| 2. गरुडपुराणम् | विसर्जनीयस्य सकारः (कःचरेत्=कस्चरेत्=कश्चरेत्), विसर्जनीयभावः (कः+कुर्यात्=कः कुर्यात्), |

---

106 नारदीयपु॰ 52,29–32

107 अग्निपु॰ 350, 9–13

| | |
|---|---|
| | शरादेशः (कः+शेते =कश्शेते, कः+षण्डः = कष्षण्डः) रुत्वे सत्युकारादेशः (कः+अर्थः =कोऽर्थः)रुत्वे सति यकारादेशः (कः+इह=क इह, देवाः+आहुः =देवा आहुः) रुत्वम् (विष्णुः+व्रजति =विष्णु र्व्रजति) निपातनात् षकारः (गीर्+ पतिः=गीष्पतिः)।[108] |
| 3. नारदीयपुराणम् | विसर्जनीस्य जिह्वामूलीयम् (रामः+काम्यः=राम ᳵ काम्यः) उपध्मानीयम् (कृपः+पूज्यः=कृपᳵ पूज्यः, शरिपरे विसर्जनीयः हरिः+ पूज्यः =हरिःपूज्यः)रुत्वे सत्युकारादेशः(पूज्यः+ अर्च्यः=पूज्योऽर्च्यः) रामः+दृष्टः=रामो दृष्टः), रुत्वे सति यकारादेशः : (अबलाः+अत्र=अबला अत्र), रुत्वम्(विष्णुः+नम्यः=विष्णुर्नम्यः) यकारादेशः (भोःएष=भो एष) सुलोपः (एषस्+शाङ्गीं =एष शाङ्गीं)[109] |

पुराणत्रये सामान्येनोपलभ्यमानानि कतिपयसन्धिसिद्धरूपाणि

---

108 गरुडपु॰ 204, 8

109 नारदीयपु॰ पू॰ख॰ 52, 33–34

| अग्निपुराणम्[110] | गरुडपुराणम्[111] | नारदीयपुराणम्[112] |
|---|---|---|
| 1. दण्डाग्रम् | .................. | दण्डाग्रम् |
| 2. दधीदम् | .................. | दधीदम् |
| 3. पितृऋषभः | पितृऋषभः .......... | पितऋृषभः |
| 4. तवल्कारः | तवल्कारः | तवल्कारः |
| 5. ............... | गङ्गोदकम् | गङ्गोदकम् |

अग्निगरुडनारदीयपुराणेषूपलभ्यमानानि बहूनि सन्धिसिद्धरूपाणि काशिकासिद्धान्तकौमुद्योरप्युपलभ्यन्ते। दिङ्मात्रमधस्तात् प्रस्तूयन्ते –

1. विष्णू इमौ — नारदीयपुराणे सिद्धान्तकौमुद्यां च।[113]
2. गङ्गोदकम् — गरुडनारदीयसिद्धान्तकौमुदीषु।[114]
3. तवल्कारः — अग्निगरुडनारदीयेषु काशिकायां च।[115]
4. दण्डाग्रम् — अग्निनारदीययोः काशिकायां च।[116]
5. सैष रामः — नारदीयपुराणे काशिकासिद्धान्तकौमुद्योश्च[117]

## सन्धीनामपवादाः

सन्धीनामपवादा एषु पुराणेषु प्राचुर्येणोपलभ्यन्ते। परं स्वरसन्धीनामतिक्रमणमग्निपुराणे वैपुल्येन दरीदृश्यतेऽन्येषु पुराणेषु तदपेक्षातो न्यूनतरम्।

---

110 अग्निपु॰ 350, 1–3

111 गरुडपु॰ 204, 1–3

112 नारदीयपु॰ पू॰खं॰ 52, 28

113 नारदीयपु॰ पू॰खं॰ 52, 28, सि॰ कौ॰ 162

114 गरुडपु॰ 204, 2; नारदीयपु॰पू॰खं॰52, 26, सि॰कौ॰104

115 अग्निपु.350,2 गरुडपु.204,2, नारदीयपु.पू.खं.52,26,काशिका 6,1,87

116 अग्निपु॰ 350, 1, नारदीयपु॰पू॰खं॰ 52, 25

117 नारदीयपु॰पू॰खं॰ 52, 34 का॰ 6,1,134, सि॰कौ॰ 261

स्वरसन्धिः

1. सवर्णदीर्घसन्धिः

(कः) एतौ च भक्षयिष्यामि इत्युक्त्वाऽत्तुं समुद्यता।[118] पाणिनिनाऽकः सवर्णेऽचि परतः अकः सवर्णे दीर्घ[119] इत्यनेन दीर्घसन्धिर्निर्दिष्टः। परं भक्षयिष्यामि इत्युक्त्वेत्यत्र दीर्घसन्धिर्न विहितः। सन्ध्यनन्तरं तु भक्षयिष्यामीत्युक्त्वेति रूपं स्यात्।

(खः) केनास्मद्भाग्यगुरुणा आनीतो दृष्टिगोचरम्।।[120]

अत्रापि पूर्वोक्तेन सूत्रेण केनास्मद्भाग्यगुरुणा आनीत इति रूपस्य सवर्णदीर्घसन्ध्यनन्तरं केनास्मद्भाग्यगुरुणानीत इति रूपं स्यात्। सन्ध्यनन्तरं चित्तज्ञा प्रमत्तेति रूपं स्यात्।

(गः) प्रीणयामास चित्तज्ञा अप्रमत्तानुवृत्तिभिः।।[121]

अत्रापि पूर्वकथितेन सूत्रेण चित्तज्ञा अप्रमत्ता इतिस्थाने सवर्णदीर्घः। सन्ध्यनन्तरं चित्तज्ञाऽप्रमत्तेति रूपं स्यात्

2. गुणसन्धिः–

(कः) धनुर्बाहून्शिरास्येव उत्तिष्ठन्ति शिरांसि हि।[122]

अष्टाध्याय्यां पाणिनिना अवर्णादचि परतः पूर्वपरयोः स्थाने आद्गुण इति सूत्रेण गुणैकादेशः प्रोक्तः।[123] परं शिरांस्येव उत्तिष्ठन्तीत्यत्र न गुणसन्धिर्विहितः। अत्र गुणसन्ध्यनन्तरं शिरांस्येवोत्तिष्ठन्तीति रूपं स्यात्।

---

118 अग्निपु॰ 7, 5

119 अ॰ 6, 1, 101

120 मार्कण्डेयपु॰ 10, 21

121 भागवतपु॰ 9, 3,10

122 अग्निपु॰ 10, 25

123 अष्टा॰ 6, 1, 87

(खः) वातापी नमुचिश्चैव इल्वलः खसृमस्तथा।[124] अत्र पूर्वोक्तेन सूत्रेण चैव इल्वल इति स्थाने गुणसन्ध्यनन्तरं चैवेल्वल इति रूपं स्यात्।

तामसं भावमाश्रित्य ईदृग् युद्धं चिकीर्षितम्।।[125]

अत्र पूर्वनिर्दिष्टसूत्रेण आश्रित्य ईदृग् इति स्थाने गुणसन्ध्यनन्तरं आश्रित्येदृगिति रूपं स्यात्।

(गः) पुरुषं पुरुषसूक्तेन उपतस्थे समाहितः।[126]

अत्रापि पूर्वनिर्दिष्टसूत्रेण पुरुषसूक्तेन उपतस्थे इति स्थाने गुणसन्ध्यनन्तरं पुरुषसूक्तेनोपतस्थ इति रूपं स्यात्।

3. पररूपैकादेशः

ध्रुवमेकाक्षरं ब्रह्म ओमित्येव व्यवस्थितम्।[127]

अष्टाध्याय्यां पाणिनिना अवर्णादोमिति परतः ओमाङोश्च[128] इति सूत्रेण पररूपैकादेशो विहितः। परं ब्रह्म ओम् इत्यत्र पररूपैकादेशसन्धिर्न विहितः। अत्र पररूपसन्ध्यनन्तरं ब्रह्मोमिति रूपं स्यात्।

4. वृद्धिसन्धिः

(कः) तद्वाक्यसमकालं च एकैकास्ता नतास्ततः।[129]

---

124 विष्णुपु॰ 1, 21, 11,
125 मार्कण्डेयपु॰ 9,26
126 भागवतपु॰ 10, 1, 20
127 विष्णुपु॰ 1, 18, 9
128 अष्टा॰ 6, 1, 95
129 मार्कण्डेयपु॰ 1, 37

पाणिनिनाऽवर्णादेचि परतः पूर्वपरयोःस्थाने वृद्धिरेचि[130] इति सूत्रेण वृद्धिरेकादेशो निर्दिष्टः। परं च एकैकाः इत्यत्र न वृद्धिसन्धिर्विहितः। एतत्सन्ध्यनन्तरं तु चैकैका इतिरूपं स्यात्।

(खः) ततः कालेन महता ऐकान्तिकमुपागतः।[131]
अत्रापि पूर्वनिर्दिष्टेन सूत्रेण महता ऐकान्तिकमिति स्थाने दीर्घैकादेशसन्ध्यनन्तरं महतैकान्तिकमिति रूपं स्यात्।

5. यण्सन्धिः

(कः) सीताग्रे तां हरिष्यामि अन्यथा मरणं तव।
पाणिनिनैकोऽचि परतः इको यणचीति[132]सूत्रेण यणादेशो विहितः। परं हरिष्यामि अन्यथा इत्यत्र यणादेशो न दृश्यते। यणादेशानन्तरमत्र हरिष्याम्यन्यथेति रूपं स्यात्।

(खः) जम्बूद्वीपेश्वरो यस्तु आग्नीध्रो मुनिसत्तम।।[133]
अत्र पूर्वनिर्दिष्टेन सूत्रेण तु आग्नीध्रो इति स्थाने यणादेशानन्तरं त्वाग्नीध्रो इतिरूपं स्यात्।

(गः) कृत्स्नो मृतस्तथाश्नाति उभे सुकृतदुष्कृते।[134]
अत्र पूर्वोक्तसूत्रेण तथाश्नाति उभे इति स्थाने यण्सन्ध्यनन्तरं तथाश्नात्युभे इतिरूपं स्यात्।

6. एच्सन्धिः

(कः) असौ अमू अमी श्रेष्ठा अमुमभूनिहामुना।[135]

---

130 अ॰ 6, 1, 88
131 मार्कण्डेयपु॰ 10, 40
132 अ॰ 6, 1, 77
133 विष्णुपु॰ 2,1,15
134 मार्कण्डेयपु॰ 10, 4
135 अग्निपु॰ 35, 70

पाणिनिना अचि परत एचः स्थाने एचोऽयवायाव[136] इति सूत्रेणायादय आदेशाः प्रोक्ताः।परमसौ अमू इत्यत्र आवादेशो न कृतः । आवादेशानन्तरमसावमू इति रूपं स्यात्।

(खः) अन्तःप्रकाशास्ते सर्वे आवृताश्च परस्परम्।[137]
अत्र पूर्वनिर्दिष्टेन सूत्रेण सर्वे आवृता इति स्थाने अयादेशानन्तरं य लोपे च सति सर्व आवृता इति रूपं स्यात्।

(गः) राजन्जातमपत्यं मे इत्युक्त्वा प्ररुरोद ह।[138]
अत्र पूर्वोक्तेन सूत्रेण मे इत्युक्त्वा इति स्थाने अयादेशानन्तरं म इत्युक्त्वेति रूपं स्यात्।

(घः) उपधार्य मतिं कृष्णे औत्तरेयः सतीं व्यधात्।।[139]
अत्रापि पूर्वकथितेन सूत्रेण कृष्णे औत्तरेय इति स्थानेऽयादेशानन्तरं यलोपे च सति कृष्ण औत्तरेय इति रूपं स्यात्।

पूर्वरूपसन्धिः

(कः) जटायुषा स विरथो अंसमादाय जानकीम्।[140]
पाणिनिना पदान्तादेङोऽति परतः एङः पदान्तादतीति[141] सूत्रेण पूर्वपरयोः स्थाने पूर्वरूपैकादेशः प्रोक्तः। परं विरथो अंसमित्यत्र न तथाविध आदेशः। पूर्वरूपैकादेशानन्तरमत्र विरथोंऽसमिति रूपं स्यात्।

(खः) हृदि नारायणश्चास्ते अश्विनौ पूर्वपादयोः।।[142]

---

136 अ॰ 6, 1, 78
137 विष्णुपु॰ 1, 5,11
138 मार्कण्डेयपु॰ 8, 22
139 भागवतपु॰ 2, 4, 1
140 अग्निपु॰ 7, 18
141 अ॰ 6,1,109
142 विष्णुपु॰ 2, 12, 32

अत्र पूर्वनिर्दिष्टेन सूत्रेण ते अश्विनौ इति स्थाने पूर्वरूपैकादेशानन्तरं तेऽश्विनाविति रूपं स्यात्।

(गः) अवापु दुरवापां ते असद्भिर्विषयात्मभिः।।[143]

अत्रापि पूर्वोक्तेन सूत्रेण ते असद्भिरित्यत्र स्थाने पूर्वरूपैकादेशानन्तरं तेऽसद्भिरिति रूपं स्यात्।

प्रगृह्यसन्धिः

(कः) विष्णोः स्वरूपात् परतो हि ते द्वे
रूपे प्रधानं पुरुषश्च विप्र।
तस्यैव ते ऽन्येन धृते वियुक्ते
रूपांन्तरं तद् द्विज कालसन्ज्ञम्।।[144]

पाणिनिना ईदूदेदन्तं द्विवचनं ईदूदेद् द्विवचनं[145] प्रगृह्यमिति सूत्रेण प्रगृह्यसञ्ज्ञं प्रतिपादितम्। प्लुतप्रगृह्या[146] अचि नित्यमितिसूत्रेण च प्रकृतिभावो निगदितः। परं तेऽन्येनेत्यत्र न प्रकृतिभावो दृश्यते। प्रकृतिभावानन्तरमत्र ते अन्येनेति रूपं स्यात्।

(खः) पृथोः पुत्रौ तु धर्मज्ञौ जज्ञातेऽन्तर्द्धिवादिनौ।[147]

अत्र पूर्वनिर्दिष्टाभ्यां सूत्राभ्यां जज्ञातेऽन्तर्द्धिवादिनावित्यत्र प्रकृतिभावानन्तरं जज्ञाते अन्तर्द्धिवादिनाविति रूपं स्यात्।

(गः) अहोऽस्य तपसो वीर्यमहोऽस्य तपसः फलम्।

---

143 भागवतपु॰ 1, 15, 48
144 विष्णुपु॰ 1, 2, 24
145 अ॰ 1,1,11
146 अ॰ 6, 1, 25
147 विष्णुपु॰ 1, 14, 1,

पूर्वकायादीन्युदाहरणानि सिद्धान्तकौमुद्यां काशिकायां चोपलभ्यन्ते।[171]

2. गरुडपुराणम् वृकभीतिः।[172]

वृकभीतिरित्युदाहरणं काशिकायां सिद्धान्तकौमुद्यां चोपलभ्यते।[173]

3. नारदीयपुराणम् रामाश्रितः, धान्यार्थः, यूपदारु, व्याघ्रभीः राजपुरुषः, अक्षशौण्डः, अब्राह्मणः।[174]

रामाश्रितव्याघ्रभीभ्यामृतेऽन्यान्युदाहरणानि काशिकायां सिद्धान्तकौमुद्यां चोपलभ्यन्ते।[175]

4. कर्मधारयः

1. अग्निपुराणम् अस्य सप्तेमे भेदा :–[176]

1. विशेषणपूर्वकः नीलोत्पलम्
2. विशेष्योत्तरपदः वैयाकरणखसूचिः
3. द्विपदकर्मधारयः शीतोष्णम्
4. उपमानपूर्वपदः शङ्खपाण्डुरः
5. उमपानोत्तरपदः पुरुषव्याघ्रः
6. सम्भावनापूर्वपदः गुणबुद्धिः
7. अवधारणापूर्वपदः सुबन्धुकः।

---

171 पूर्वकायः, अपरकायः सि.कौ. 1030 काशिका, 2, 2, 1 (1) भिक्षातुर्यम् काशिका 2,2,2 (2) आपन्नजीविकः सि. 1036 का. 2,2,4 (3) धान्यार्थः सि. 1000, काशिका 2,1,30 (4) वृकभीतिः सि. 1013, का. 2,1,37 वार्त्तिकम् (5) राजपुरुषः सि. 1016, काशिका 2, 2, 8 (6) अक्षशौण्डः सि. 1039, काशिका 2,1,40

172 गरुडपु. 204, 12

173 सि. 109, काशिका 2,2,6

174 नारदीयपु. पू. खं. 52, 91–93

175 काशिका सि. कौ.

176 अग्निपु. 355, 8–11

नीलोत्पलं वैयाकरणखसूचिः, पुरुषव्याघ्रश्चेमान्युदाहरणानि काशिकायां सिद्धान्तकौमुद्यां चापि दृश्यते।[177]

2. गरुडपुराणम् सद्विजः।[178]

3. नारदीयपुराणम् नीलोत्पलम्, महाषष्ठी।[179]

नीलोत्पलमित्युदाहरणमग्निपुराणे काशिकायां सिद्धान्तकौमुद्यां चापि दृश्यन्ते।[180]

## द्विगुः

अग्निपुराणम् एष द्विविधः, 1. एकवद्भावी द्विशृङ्गम् 2. अनेकवद्भावी पञ्चमूली[181]

पञ्चमूली इत्युदाहरणं काशिकायां सिद्धान्तकौमुद्यामपि विलोक्यते।[182]

गरुडपुराणम् त्रिवेदी[183]

नारदीयपुराणम् पञ्चगवम्, दशग्रामी, त्रिफला[184]

पञ्चगवमित्युदाहरणं काशिकायां सिद्धान्तकौमुद्यामपि [185]प्रदर्शितम्।

---

177 1) नीलोत्पलम् का ॰ 2,1,57, सि॰ कौ॰ 1062
2) वैयाकरणखसूचिः का॰ 2,1,53 , सि॰ कौ॰ 1058
3) पुरुषाव्याघ्रः का॰ 2,1,56, सि॰ कौ॰ 1061

178 गरुडपु॰ 204, 11

179 नारदीयपु॰ सि॰कौ॰

180 काशिका सि॰ कौ॰

181 अग्निपु॰ 355, 15

182 काशिका 2, 4, 17 वार्तिकम् ; सि॰ 1176

183 गरुडपु॰ 204, 11

184 नारदीयपु॰ पू॰खं॰ 52, 92

185 काशिका 2, 4, 17, सि॰ 1175

द्वन्द्वः

| | |
|---|---|
| अग्निपुराणम् | अयं द्विप्रकारात्मकः 1.इतरेतर–योगद्वन्द्वः 2.समाहारद्वन्द्वः रुद्रविष्णू, भेरीपटहम्[186] |
| गरुडपुराणम् | देवर्षिमानवाः।[187] |
| नारदीयपुराणम् | रामकृष्णौ।[188] |

बहुव्रीहिः अयं सप्तधा[189]

अग्निपुराणम्

| | |
|---|---|
| 1. द्विपदबहुव्रीहिः | आरूढभवनः |
| 2. बहुपदबहुव्रीहिः | अर्चिताशेषपूर्वः |
| 3. सङ्ख्योत्तरपदबहुव्रीहिः | उपदशाः |
| 4. सङ्ख्योभयपदबहुव्रीहिः | द्वित्राः, द्व्यैकत्रयः |
| 5. सहपूर्वपदबहुव्रीहिः | समूलोद्धृतकस्तरुः |
| 6. व्यतिहारलक्षणबहुव्रीहिः | केशाकेशि, नखानखि |
| 7. दिग्लक्ष्यो बहुव्रीहिः | दक्षिणपूर्वा |

## व्याकरणमूलकदोषाः

अग्निपुराणे असाधुत्वछान्दसत्वपदवाक्यगतदोषयोःक्रियाभ्रंशादीनां वाच्य दोषाणाञ्च लक्षणानि उपलभ्यन्ते। इमे दोषा व्याकरणमूलका दोषाःसन्ति यतो हि एषु व्याकरणनियमा न परिपालिता दृश्यन्ते। अत्राग्निपुराणप्रोक्तलक्षणान्यनुसृत्य विष्णुमार्कण्डेयभागवतपुराणेभ्यस्ते–षामुदाहरणानि प्रस्तूयन्ते।

(कः) असाधुत्वम् – शब्दशास्त्रविरुद्धत्वमसाधुत्वं विदु र्बुधाः।[190]

---

186 अग्निपु॰ 355, 16
187 गरुडपु॰ 204, 13
188 नारदीयपु॰पू॰खं॰ 52, 96
189 अग्निपु॰ 355, 11–15

यत्र व्याकरणशास्त्रप्रतिपादितनियमानामुल्लङ्घनं दृश्यते तत्रासाधुत्व–दोषो जायते।

मत्तो ऽयुमिति मन्वानाः समुत्तस्थुस्त्वरान्वितः।
पूजयन्तो हलधरमृते तं सूतवंशजम्।।[191]

अन्यारादितरर्ते दिगित्यादिपाणिनीयसूत्रेण ऋतेयोगे पञ्चमी प्रोक्ता।[192] परमेनं विशेषविधिमुत्सृज्य द्वितीयायाः प्रयोगो विहितः। अस्मादत्रासाधुत्वदोषः प्रसज्यते।

तस्य नाभेः समभवत्पद्मकोशो हिरण्मयः ।
तस्मिञ्जज्ञे महाराज स्वयंभूश्चतुराननः।।[193]

जनिकर्तुः प्रकृतिरितिपाणिनिसूत्रेण जनेःकर्तुःप्रकृतेरपादानसञ्ज्ञा प्रोक्ता तत्र च पञ्चमी निर्दिष्टा[194] परमत्र सप्तम्याः प्रयोगाः कृतः। अस्मादस्य प्रयोगस्य व्याकरणविरुद्धत्वादत्र असाधुत्वदोषो विद्यते।

(खः) छान्सत्वम् – छान्दसत्वं न भाषायाम्।[195]

तेजो वारिमृदां यथा विनिमयो यत्र त्रिसर्गोऽमृषा।
धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि।।

अत्र धीमहीति वैदिकं रूपम्। लोके ध्यायते लट्युत्तमपुरुषस्य बहुवचने ध्यायाम इति रूपं स्यात्।[196]

अत एवात्र छान्दसत्वदोषः। छान्दसप्रयोगो लौकिकसंस्कृते न कर्तव्यः।

(गः) क्रियाभ्रंश : अक्रियत्वं क्रियाभ्रंशः।[197]

---

190 अग्निपुराणम् 347, 5
191 मार्कण्डेयपुराणम् 6, 28
192 अ॰ 2, 3, 29
193 भागवतपुराणम् 9, 1, 9
194 अ॰ 1, 6, 30
195 छान्दसत्वं न भाषायाम् अष्टाध्यायी 1, 4, 30
196 मुनिलावण्यविजयः धातुरत्नाकरः 30 ध्यै चिन्तायाम् ध्यायामः पृ॰20

यत्र क्रियाया अभावस्तत्र क्रियाभ्रंशः
भागवतपुराणे रासलीलावर्णनम्—
ताः समादाय कालिन्द्या निर्विश्य पुलिनं विभुः।
विकसत्कुन्दमन्दारसुरभ्यनिलषट्पदम्।।[198]

अत्र पुलिनं निर्विश्य कृष्णः किमकरोदिति तु न केनचित् क्रियापदेनोक्तम्। अनेनात्रोपविवेशेति क्रियापदस्य भ्रंशनात् क्रियाभ्रंशदोषः प्रसज्यते।

(घः) कारकभ्रंशः —— भ्रष्टकारकता पुनः।
कर्त्रादिकारकाभावः — — — — ।।[199]

यत्र हि कर्त्रादिकारकाणामभावो दृश्यते तत्र कारकभ्रंशाख्यो दोषो जायते।
भागवतपुराणे राक्षसभावमापन्नं कल्माषपादं नृपं ब्राह्मणी स्वपतिमुन्मोचयितुमेवमभिदधाति —

तस्य साधोरपापस्य भ्रूणस्य ब्रह्मवादिनः।
कथं वधं यथा बभ्रो मन्यते सन्मतो भवान्।।[200]

अत्र कथं वधं यथा बभ्रो मन्यते सन्मतो भवानिति वाक्ये कमपदस्याभावः अत्रोचितमसाधु वेतिकर्म पदमपेक्ष्यते। एवमत्र कर्म कारकाभावात्कारकभ्रंशदोषः।

(ङ) विसन्धि : — — — — — विसन्धि : सन्धिदूषणम्।।[201]
सन्धे दोंष एव विसन्धिः।
विष्णुपुराणे :—
पौर्णमासी तथा ज्ञेया अमावास्या तथैव च[202]।

---

197 अग्निपु॰ 347, 15
198 भागवतपु॰ 10,32,11
199 अग्निपु॰ 347, 15
200 भागवतपु॰ 9,9,31
201 अग्निपु॰ 347, 15

अत्र ज्ञेया अमावास्येति पदयो दीर्घसन्ध्यभावाद् विसन्धिदोषः ।
मार्कण्डेयपुराणे :–

नमस्ते ऋक्स्वरूपाय सामरूपाय ते नमः।[203]

नमस्ते ऋगत्रेच्सन्ध्यभावाद् विसन्धिदोषः।

भागवतपुराणे :

वासुदेवे भगवति आत्मभावं दृढं गतः।[204]

अत्रापि यण्सन्ध्याभावाद्विसन्धिः।

(चः) पुनरुक्तत्वम् – पुनरुक्तत्वमभीक्ष्ण्यादमिधानम् ..........।[205]

यत्र कस्यद्विषयस्य पुनः पुनः कथनं तत्र पुनरुक्तत्वम्।

भागवतपुराणे विरहातुराणां गोपीनां वर्णनम् –

गत्यनुरागस्मितविभ्रमेक्षितै – –
र्मनोरमालापविहारविभ्रमैः।
आक्षिप्तचित्ताः प्रमदा रमापते –
स्तास्ता विचेष्टा जगृहुस्तदात्मिकाः।।[206]

अत्र गत्यनुरागस्मितविभ्रमेक्षतै मनोरमालापविहारविभ्रमै रितिपद प्रयोगानन्तरं गतिस्मितप्रेक्षणभाषाणादिषु कृष्णविहारविभ्रमा इति तत्सदृशयोः पदयोः पुनः प्रयोगादर्थपुनरुक्तिः।

(छः) व्यस्तसम्बन्धता – व्यस्तसम्बन्धताऽसुष्ठुसम्बन्धो व्यवधानतः।[207]

यत्र केनचिद् व्यवधानेन पदानां पारस्परिकसम्बन्धस्य न सम्यङ् निर्वाहस्तत्र व्यस्तसम्बन्धता।

भागवतपुराणे व्रजवनितानां विलापदशावर्णनम् –

एवं ब्रुवाणा विरहातुरा मृशं
व्रजस्त्रियः कृष्णविषक्तमानसाः।
विसृज्य लज्जां रुरुदुः स्म सुस्वरं।

---

202 विष्णुपु॰ 2, 8, 82
203 मार्कण्डेयपु॰ 75, 2
204 भागवतपु॰ 2, 4, 4
205 अग्निपु॰ 347, 17
206 भागवतपु॰ 10,30, 2–3
207 अग्निपु॰ 347, 19

गोविन्द दामोदर माधवेति।।[208]
अत्र सुस्वरमिति पदस्य विसृज्य लज्जां रुरुदुः स्मेति वाक्येन सह योग्यताभावात् न सुष्ठुसम्बन्धः।[209] यतो हि विरहार्तजनानां विलापोक्तयो न मधुरा भवन्ति। सुस्वरमिति पदस्य स्थाने यदि सस्वनमिति पाठः स्यात्तर्हि पदसम्बन्धनिर्वाहः सम्यग् भवेत्।

समीक्षणम्

अग्निपुराणस्य व्याकरणभागे कारकप्रकरणादृते व्याकरण–नियमास्तेषामुदाहरणानि च नैकत्र प्रदर्शितानि। अपि च त्रिष्वध्यायेषु (351-353) सुबन्तशब्दानां यानि सिद्धरूपाणि तानि सर्वाण्यनालोचनात्मकविध्या प्रोक्तानि। अत्र प्रथमं तावत्स्वरान्ताः पुल्लिङ्गशब्दा अनन्तरं च स्त्रियां नपुंसि च केचन शब्दा निर्दिष्टाः। तदनु कर्त्रादिकारकाणां व्युत्पत्त्यनुसारिलक्षणानि प्रस्तुतानि। कारकलक्षणानन्तरमग्रतो निर्दिष्टानां शब्दानां पुल्लिङ्गादिवर्गीकरण–सम्बन्धि किमप्यनुशासनं नाङ्गीकृतम्। अन्यच्चात्र वृक्षरमाऽस्मद–युष्मदादिकतिपयशब्दानामेव सप्तसु विभक्तिषु रूपाणि दृश्यन्ते। अन्येषां शब्दानां रूपाणि सर्वासु विभक्तिषु नोपलभ्यन्ते। अस्मात्तेषां स्वरूपमपि नावगम्यते। अन्ययो द्वर्वयोरध्याययोः (352-353) वर्णितेषु सुबन्तशब्दरूपेष्वप्ययमेव दोषः। वस्तुतोऽग्निपुराणस्य न केवलं सुबन्तसिद्धरूपप्रकरणमपितु सकल एव व्याकरणभाग आलोचनात्मिकां सूक्ष्मेक्षिकामपेक्षते। यद्येतत्सर्वं नियमोदाहरणैः सह सक्रममुपन्यस्यते तर्हि बालानां कृतेऽस्योपयोगितायां ध्रुवमेव वृद्धिः स्यात्। अत्रग्निपुराणवर्ति कारकसन्धिसमाससम्बन्धिनी सामग्री एव सविशेषं विवेचिता।

मार्कण्डेयपुराणे कतिपयस्थलेभ्य ऋते प्रायशः सर्वत्र पाणिनीयव्याकरणनियमा अनुसृताः। विष्णुपुराणे क्वचित्क्वचिदे–

---

208 भागवतपु॰ 10, 39, 31

209 वाक्यं स्याद् योग्यताकाङ्क्षाऽऽसत्तियुक्तः पदोच्चयः ।। साहित्यदर्पणः 2,1

तन्नियमानामपवादा अप्युपलम्यन्ते। यद्यपि भागवतपुराणेऽपि पाणिनीयव्याकरणनियमानामेव विशेषेणानुसरणं तथाऽप्यत्रैतेषामपवादा अपि प्राचुर्येणोपलभ्यन्ते। इमेऽपवादा उपरिष्टात् सङ्क्षेपेण प्रदर्शिताः।

विष्णुमार्कण्डेयभागवतपुराणेषु वैदिकशब्दा दृश्यन्ते। भागवत–पुराणे तु तेषां बाहुल्यम्। शिवदत्तज्ञानिना पुराणानामाख्यानांशो वैदिककालवर्तीति यदनुमितं निवेदितम्। वेदा इव पुराणान्यपि श्रुतिपरम्परयाऽश्रूयन्त। काले काले च तदन्तर्वर्तिषु विष्येषु परिवर्तनं परिवर्धनञ्च व्यधीयेताम् । पुराणानं वर्ण्यविषयाणां सम्बन्धे यद्येतस्या अनुमित्या अवकाशस्तर्हि तेषां भाषाया विषयेऽप्येष स्यात्। यथा पुराणानां विभिन्नानि संस्करणानि विभिन्नेषु कालेषु स्वकीयवर्ण्य–विषयेषु परिवृत्तिं परिवृद्धिञ्चालभन्त तथैव तेषां भाषाऽपि परिवर्तनं परिवर्धनञ्च प्राप्तवती। स हि भाषा तत्तत्कालवर्तिनिभि र्भाषाभिः प्रभाविताऽभूत्। परं तस्यां केचन परिवर्तनमलभमाना वैदिकशब्दाः कतिपये च पाणिनीयापाणिनीयव्याकरणविरुद्धाः शब्दा अवातिष्ठन्ते–त्यपि सम्भाव्यते। विष्णुभागवतपुराणयोष्टीकाकर्त्रा श्रीधरेण येषां प्रयोगाणामार्षमिति छान्दसमिति वा संज्ञा विहिता तेषु केचन शब्दाः पाणिनिप्रोक्तवैदिकव्याकरणनियमानुकूला केचन तद्विपरीताः। इमे च व्याकरणविरुद्धप्रतीयमानाः शब्दा यदा यदा पुराणेष्वाविशंस्तदा तदा ते सम्भवतस्तत्तत्समयेषु वर्तमानासु भाष्यमाणासु भाषासु प्रचलिताः समभवन्। ते च ताभ्य : सहजभावेन पुराणेषु समक्रमन्।

विष्णुमार्कण्डेयभागवतपुराणेषु त्रिविधाः प्रयोगा उपलभ्यन्ते – 1. वैदिकाः 2. लौकिकाः 3. विशिष्टाश्च । पाणिनिनाऽष्टाध्याय्यां वैदिकं लौकिकं चोभयविधं व्याकरणं प्रोक्तम्। वैदिकलौकिकाः प्रयोगाः पाणिनीयं व्याकरणमनुसरन्ति परं विशिष्टप्रयोगास्तदनुयायिनो न सन्ति । एषां विषयेऽपीदमनुमातुं शक्यते – सम्भवत एते प्रयोगाः पाणिनेः पूर्ववर्तिनां शाकटायनादिव्याकरणानां नियमाननुसरन्ति यद्वा कदाचिदिमे पाणिनेरुत्तरवर्तिनां जैनेन्द्रादिव्याकरणानां नियमैः सह सङ्गच्छन्ते। पाणिनेः पूर्ववर्तिषु व्याकरणेष्विदानीं शाकटायनादीनि द्वित्राण्येवोपलभ्यन्ते। पाणिन्युत्तरवर्तिनां चान्द्रादिव्याकरणानां तु विपुला सङ्ख्या विद्यते। पाणिनेः पूर्ववर्तिनामुत्तरवर्तिनाञ्च व्याकरणाना–

मध्ययनेनैतेषां विशिष्टप्रयोगाणां सम्बन्धे कतमः प्रयोगः कतमं व्याकरणमनुसरतीति ज्ञातुं शक्यते। अपि च येषां प्रयोगाणां विषये न किमपि ज्ञायते ते पाणिनेः पूर्ववर्तिना केनचिदविदितस्वरूपेण विलुप्तेन व्याकरणेन सह सम्बद्धा इत्यप्यनुमातुं युज्यते।

कारकसन्धिसमासविषये पाणिनीयव्याकरणनियमानां व्यतिक्रमं दृष्ट्वेदमनुमीयते यद् विष्णुमार्कण्डेयभागवतपुराणानां रचनासमये संस्कृतभाषा भाष्यमाणा लोकभाषाऽऽसीत् । तदानीं पाणिनीय–व्याकरणेन सहैवान्यान्यपि व्याकरणानि शिष्टजनानुमतान्यभवन्। सम्भाष्यमाणायां संस्कृतभाषायां सन्धय एव तस्याः प्रवाहे सर्वाधिकमन्तरायं जनयन्ति। लेखनसमये तु सन्धिनियमानामनुसरणं सुकरं परं सम्भाषणकाले तदेव दुष्करम्। लौकिकसंस्कृतस्य कालिदासादिकविकृतकाव्येषु सन्धिनियमाः परिपालिताः। पद्यसाहित्ये तु सन्धय इमे नित्यतया दृश्यन्ते। परं पुराणेषु विसन्धिताख्यः सन्धिभङ्गदोषोऽतिप्राचुर्येण विलोक्यते। एषु सन्धिषु स्वरसन्धि–नियमापवादानां बाहुल्यम्। भाष्यमाणासु भाषास्वेव व्याकरणनियमानां शैथिल्यं दृश्यते। सम्प्रत्युपलभ्यमानानि पुराणानि यदा व्यरच्यन्त तदा संस्कृतभाषा जनै दैंनिके जीवनेऽपि प्रायुज्यतेत्यनेन सन्धि–भङ्गेनानुमीयते।

यथा वेदेषु तुमर्थकानां सेसेनसेप्रभृतीनां प्रत्ययानां बाहुल्येन प्रयोगस्तथा न पुराणेषु दृश्यते। यद्यपि पुराणानां भाषा कालिदासादीनां काव्येषु प्रयुज्यमानया भाषया सहैव प्राधान्येन संवदति परमत्र वेदेषु प्रयुज्यमानाया भाषाया अपि यत्र तत्र प्रभावो लक्ष्यते।

यथा कालिदासादिकविभि र्लिट्लङ्लुङ्लकाराः सामान्यभूतार्थे प्रयुक्तास्तथैवेमे पुराणेष्वपि। अत्र दिङ्मात्रमुदाह्रियते –

रघुवंशे नन्दिन्या सह दिलीपस्य वनगमनम्
मार्गं मनुष्येश्वरधर्मपत्नी
श्रुतेरिवार्थं स्मृतिरन्वगच्छत्।
पयोधरीभूतचतुः समुद्रां

जुगोप गोरूपधरामिवोर्मिम्।
व्रताय तेनानुचरेण धेनो
र्न्यषेधि शेषोऽप्यनुयायिवर्गः।[210]

अत्रागच्छज्जुगोप न्यषेधि चेति त्रयः शब्दाः सामान्यभूतार्थे प्रयुक्ताः।

भागवतपुराणे हिरण्याक्षवधप्रसङ्गः–
अवधार्यविरञ्चिरस्य निर्व्यलीकामृतं वचः।
प्रहस्य प्रेमगर्भेण तदपाङ्गेन सोऽग्रहीत्।।
ततः सपत्नं मुखतश्चरन्तमकुतो भयम्।
जघानोत्पत्य गदया हनावसुरमक्षजः।।
सा हता तेन गदया विहता भगवत्करात्।
विघूर्णितापद्रेजे तदद्भुतमिवाभवत्।[211]

अत्राप्यग्रहीज्जघानाभवच्चेति पदानि सामान्यभूतार्थे प्रयुक्तानि। ब्राह्मणग्रन्थानापुपनिषदां च गद्येन सहापि विष्णुभागवतपुराणस्य गद्यभागः संवदतीत्यत्र सङ्क्षेपेण प्रदर्श्यते –

शतपथब्राह्मणे – अथ देवताया आदिशति । सर्व्वाह वै देवता......[212]

केनोपनिषदि– ब्रह्मदेवेभ्यो विजिग्ये तस्य ह ब्रह्मणो विजये देवा अमहीयन्त।[213]

विष्णुपुराणे– अयं हि भगवान् कीर्तितश्च संस्मृतश्च......[214]

भागवतपुराणे– तस्य ह वाव श्रद्धया विशुद्धभावेन यजतः– प्रवर्ग्येषु .....[215]

अत्र गद्यास्थलेषु श्लोके च ह हि वै निपाताः।

अन्याप्येवंविधान्यव्ययानि निपाताश्च भागवतपुराणे प्राचुर्येण दृश्यन्ते।

एवमेतेषु, पुराणेषु प्रयुज्यमाना भाषा चतुर्णां वेदानां काव्य–ग्रन्थानां ब्राह्मणानामुपनिषदाञ्च भाषाभिः सह संवदति।

---

210 रघुवंशः 2, 2–4
211 भागवतपु॰ 3, 19, 1–3
212 शतपथब्रा॰ 1,1,2,18
213 केनोपनिषत् 3, 1
214 विष्णुपु॰ 4, 15, 17
215 भागवतपु॰ 5, 3, 2

## पुराणवर्तिकाव्यशास्त्रं तत्सम्प्रदायश्च

काव्यशास्त्रम् – अग्निपुराणे 337 तमाऽध्यायादारभ्य 347 तममऽध्यायं यावत् काव्यशास्त्रं सविस्तरं प्रतिपादितम्।

337 तमेऽध्याये काव्यलक्षणं काव्यस्य प्रकारत्रयं गद्यकाव्यस्य पञ्चभेदा महाकाव्यलक्षणादिकथनं च। 338 तमेऽध्याये नाट्यस्य विविधभेदा उपरूपकाणि, प्रस्तावना पञ्चार्थप्रकृतयःपञ्च च सन्धयो वर्णिताः। 339 तमेऽध्याये शृङ्गारादयो रसा रत्यादिस्थायिभावा विभावानुभावव्यवभिचारिभावा नायकनायिकाभेदा अनुनायकादयः स्त्रीपुंसयोश्च भावादयः प्रपञ्चिताः। 340 तमेऽध्याये चतस्रः पाञ्चाल्यादयो रीतयश्चतस्रश्च भारत्यादयो वृत्तयो निगदिताः। 341 तमेऽध्याये स्त्रीणां लीलाविलासादिभेदात्मिकाश्चेष्टाविशेषा नृत्यावसरे च प्रमुखानां मुखाद्यङ्गानामितरेषां च स्वल्पाङ्गानां सञ्चालनस्य प्रकारविशेषाः प्रदर्शिताः। 342 तमेऽध्यायेऽभिनयलक्षणानन्तरं शृङ्गारादिरसानां लक्षणानि भेदाश्च। अलङ्कारलक्षणं तत्प्रकारत्रयं नवविधाश्च शब्दालङ्कारा वर्णिताः। 343 तमेऽध्यायेऽनुप्रासादयः शब्दालङ्काराश्चित्राख्यकुतूहलाधायी वाग्बन्धो गोमूत्रिकादयश्च बन्धाः प्रोक्ता। 344 तमेऽध्याये स्वरूपाद्यर्थालङ्काराणां निरूपणं तल्लक्षणं च। 345 तमेऽध्याये प्रशस्त्यादीनां षण्णामर्थालङ्काराणां कथनम्। 346 तमेऽध्याये गुणलक्षणं तद्भेदोपभेदा विशेषगुणाश्च वर्णिताः। 347 तमेऽध्याये दोषलक्षणपुरस्सरं दोषस्य सप्तप्रकाराः कथिताः। पदवाक्यगता दोषा असिद्धत्वादीनां गूढार्थतादीनां च दोषाणां परिहारोऽप्यत्र दर्शितः ।

विष्णुधर्मोत्तरपुराणमुपपुराणं विष्णुपुराणस्येवोत्तरार्धं परमिदं विषयवस्तुदृष्ट्या स्वतन्त्र एव ग्रन्थो विद्यते। अस्य पुराणस्य तृतीय खण्डवृर्तीयषु कतिपयाध्यायेष्वलङ्काररसविवेचनं सङ्क्षेपेण विहितम्। रसालङ्कार गुणदोषरीतीनां यादृशं सुविशदं सविस्तरञ्च निरूपणमग्निपुराणे तादृशं नान्यस्मिन् कस्मिंशिचदपि पुराणे दृश्यते। विष्णुधर्मोत्तरपुराणे रसालङ्काराः संक्षेपेण विवेचिताः।

1. रसा :– अग्निविष्णुधर्मोत्तरपुराणयो रस विषयिणी या विवेचनोपलभ्यते तदीयाः कतिपयाविशेषता अत्र प्रस्तूयन्ते –

(कः) रसस्यादिकारणम् – ब्रह्मैव रसस्यादिकारणम् यतोहि तस्यानन्दधर्मात् चैतन्यचमत्कार रूपात्मकौ रसः प्रजायते। इमे श्रृङ्गारादयो रसा ब्रह्मणः सत्त्वगुणात् प्रादुर्भवन्ति।[1]

(खः) रसस्य काव्यात्मत्वम् – महाकाव्ये रस एव काव्यात्मत्वेन तिष्ठति –

वाग्वैदग्ध्यप्रधानेऽपि रस एवात्र जीवितम्।
पृथक् प्रयत्नं निर्वर्त्य वाग्विविक्रम्णिः रसाद् वपुः।[2]
लक्ष्मीरिव विना त्यागान्न वाणी भाति नीरसा।[3]

विष्णुधर्मोत्तरपुराणेऽपि नाट्यस्य बन्धो रसान्वितो विधेयो यतो हि नाट्ये रसस्यैव प्राधान्यमिति प्रोक्तम्।[4] महाकाव्ये रसेन सार्धमन्येषां काव्यतत्वानामपि अनिवार्या स्थितिः प्रोक्ता।[5] कवेरपि महत्त्वातिशयः प्रतिपादितः।[6]

(गः) साधारणीकरणसिद्धान्तः – अग्निपुराणे साधारणीकरण–सिद्धान्तप्रतिपादनार्थं सामान्यशब्दस्य प्रयोगः कृतः।[7] अपि च

---

1 अग्निपु॰ 339, 1–6
2 अग्निपु॰ 337, 3
3 अग्निपुराणम् 337, 7
4 विष्णुधर्मोत्तरपुराणम् 3,27,62; 3,30,28
5 सर्वरीतिरसैः स्पृष्टं गुणविभूषणैः।
अत एव महाकाव्यं तत्कर्ता च महाकविः। अग्निपुराणम्, 337,32
6 अपारे काव्यसंसारे कविरेव प्रजापतिः।
यथास्मै रोचते विश्वं तथेदं परिवर्तते।।
श्रृंङ्गारे चेत्कविः काव्ये जातं रसमयं जगत्।
स चेत्कविर्वीतरागो नीरसं व्यक्तमेव तत्। अग्निपुराणम् 339,10–11
7 अभिमानाद्रतिः सा च परिपोषमुपेयुषी।
व्यभिचार्यादिसामान्याच्छृङ्गारः इति गीयते।।

रसलक्षणे साधारणीकरण सिद्धान्तस्य समावेशो नवीनप्रकारेण विहितः। रसभावयोश्च मध्ये अन्योन्याश्रितसम्बन्धः स्थापितः –

> कविभि र्योजनीया वै भावाः काव्यादिके रसाः।
> विभाव्यते हि रत्यादिर्यत्र येन विभाव्यते।।
> न भावहीनोऽस्ति रसो न भावो रसवर्जितः।
> भावयन्ति रसानेभि र्भाव्यन्ते च रसा इति।।[8]

कविभिः प्रयोक्तव्या रत्यादिभावा एव काव्यादिषु रसा इति कथ्यन्ते। रसस्य चेदं लक्षणम् यस्मिन् येन वा रत्यादिभावो विभाव्यते (साधारणीकरणरूपेण विभावनव्यापरेण प्रतीतियोग्यः क्रियते) स रसः। भावात् (भावानुभावसञ्चारिभावस्थायिभावेभ्यः) विना न रसो विभावादयोऽपि रसं विना न भवन्ति यतो हि लोके विना रसप्रसङ्गेन विभावादीनां न कोऽपि व्यवहारो दृश्यते। इमे भावा (विभावादयः) रसानभावयन्ति प्रतीतियोग्यान कुर्वान्ति) उतवा रसा एभिर्भावयन्ति। अत्र भावशब्दस्य विभावानुभाव सञ्चारीभाव स्थायिभावेषु तात्पर्यम्। नाट्यशास्त्रेऽपि भावशब्देनैतेषामेव ग्रहणम्।[9] एवमत्राग्निपुराणे

---

सामान्यं सर्वविषयं विशेषः क्वापि वर्तते।
रसभावविभावानुभावा अभिनयस्तथा ।
अङ्गः स्थितश्च सामान्यं सर्वत्रैवोपसर्पणात्।।

अग्निपुराणम् 339, 4; 338,5–6

8 अग्निपुराणम् 339,35; 12

9 को दृष्टान्तः। अत्राह यथा हि नानाव्यञ्जनौषधिद्रव्यसंयोगाद्र–सनिष्पात्तिः तथा नानाभावोपगमाद् रसनिष्पत्तिः। यथाहि गुडादिभि र्व्यञ्जनैरौषधिभिश्च षाडवादयो रसा निर्वर्त्यन्ते तथा नानाभावोपगता अपि स्थायिनो भावा रसत्वमाप्नुवन्ति ।

नाट्यशास्त्रम् 6,31 गद्यभागः

तथैव नानाभूतैर्विभावादिभिरुप समीपं प्रत्यक्षकल्पतां गता लोकापेक्षया ये स्थायिनो भावास्तेन (तत्रैवाभिनवभारती व्याख्या।)
नानाभिनयसम्बन्द्धान् भावयन्ति रसानिमान्।
यस्मात्तस्मादमी भावा विज्ञेया नाट्ययोक्तृभिः।
नानाद्रव्यै र्बहुविधै र्व्यञ्जनं भाव्यते यथा ।

नाट्यशास्त्रस्य प्रभावः स्फुटमेवाभिलक्ष्यते। अस्य 339 तमेऽध्याये रसविभावानुभाव व्यभिचारिभावानां निरूपणं सविस्तरं विहितम्।

(घः) श्रृङ्गाररसप्राध्यानम् – अग्निपुराणे हास्यदयो रसाः श्रृङ्गाररसस्य भेदाः सन्ति इति प्रतिपादितम्। इमे च सर्वे परमात्मानः सत्वादिकुणसन्तते र्जायन्ते इत्यपि प्रोक्तम्।[10]

2. अलंकाराः – अग्निपुराणस्य चतुर्षु (342–345) अध्यायेषु इमे त्रिविधा अलंकारा प्रतिपादिता :–

1. शब्दालङ्काराः 2. अर्थालङ्कारा :
3. उभयालङ्काराश्च

अस्मिन पुराणे ऽर्थालङ्कारास्य शब्दालङ्काराद् भूयोमहत्वं प्रतिपादितम् –

अलङ्करणमर्थानामर्थालङ्कार इष्यते।
तं विना शब्दसौन्दर्यमपि नास्ति मनोहरम्।।
अर्थालङ्काररहिता विदवेव सरस्वती।[11]

अत्र न केवलमर्थालङ्कारस्यपयोगित्वं प्रोक्तं परं काव्यतस्यावश्यिकी स्थितिरित्यपि प्रतिपादितम्। अर्थालङ्कारेणेव शब्दार्थालङ्कारेणापि शब्दार्थयोः शोभा विधीयते–

---

एवं भावा भावयन्ति रसानभिनयैः सह।।
न भावहीनोऽस्ति रसो न भावो रसवर्जितः।।
नाट्यशास्त्रम् 6,34–36

10 तद्भेदाः काममितरे हास्याद्या अप्यनेकशः।
सत्त्वादिगुणसन्तानाज्जायन्ते परमात्मनः।
अग्निपुराणम् 339,5–6

11 अग्निपुराणम् 344,1–2

शब्दार्थयोरलङ्कारो द्वावलङ्कुरुते समम्।
एकत्र निहितो हारः स्तनं ग्रीवामिव स्त्रियः।।[12]

अग्निपुराणे गुणालङ्काराणां काव्य अनिवार्यत्वेना–वस्थानममिति प्रतिपादितम् –

काव्यं स्फुरदलङ्कारं गुणवद् दोषवर्जितम्।[13]

परन्तु अन्यत्र तत्रेदमपि प्रत्यपादि यत् काव्ये अलङ्कारणां प्राधान्ये सत्यपि तच्छरीरं रसान्निर्मेयम् –

वाग्वैदग्ध्यप्रधानेऽपि रस एवात्र जीवितम्।
पृथक प्रयत्नं निर्वर्त्यं वाग् विक्रमणि रसाद्वपुहः।[14]

अनेन ह्यग्निपुराणकारस्य समन्वयवादिनी प्रवृत्तिर्लभ्यते केन–चित् सम्प्रदायविशेषेण सार्ध तस्य नानुराग इत्यपि संलक्ष्यते। अग्निपुराणे विष्णुधर्मोत्तरपुराणे च लङ्काराणां लक्षणानि प्रस्तुतानि परं तेषां निदर्शनानि न तत्रोपलभ्यन्ते।

3. दोषः – अग्निपुराणस्य 347 तमेध्याये दोषः सविस्तरं व्याख्यातः। सामजिकानां चेतसि (रसास्वादनसमये) शोभो उत्पादको हेतुर्दोषः प्रोक्तः।[15] यदप्यत्र अनेकेषामन्येषां दोषाणामपि नामतो ग्रहणं विहितं परं दशानामसाधुत्वादिपदवाक्यगतानांदोषाणां पञ्चानाञ्च ये क्रियाभ्रंशादिदोषाणामेव लक्षणान्यत्रोपलभ्यन्ते। अस्मिन पुराणे सन्धिहानत्वादयश्चत्वारो वक्तृदोषाः प्रोक्ता। न ते काव्यदोषपदवीं प्राप्तुमर्हन्ति यतो हि ते कवेरसामर्थ्यद्योतकाः सन्ति अतस्ते कवेरेव दोषा न तु काव्यस्य। अत्र रसदोषा न विवेचिताः। अपि चात्रोदाहरणानामभावाद् दोषाणां स्वरूपं न सम्यग् रूपेण ज्ञायते।

---

12 अग्निपुराणम् 345,

13 अग्निपुराणम् 337,7

14 अग्निपुराणम् 337,33

15 उद्वेगजनको दोषः सभ्यानाम् । अग्निपुराणम् 347,1

4. गुण : – अग्निपुराणस्य 346 तमेध्याये गुणानां सविस्तरं विवेचनं च दृश्यते।

(क) गुणमहत्त्वम्– यथा रूपसम्पद्विहीनाया नार्या हारेण सौन्दर्यवृद्धिर्नजायते तथैव गुणविहीनं हि काव्यं सालङ्कारं सदपि सामाजिकानां चेतसि प्रीति न जनयति –

अलङ्कृतमपि प्रीत्यै न काव्यं निर्गुणं भवेत्।
वपुष्यललिते स्त्रीणां हारो भारायते परम्।[16]

(खः) गुणानां स्वरूपं भावात्मकम्– दोषाभाव एव गुणत्वमिति मतं न समीचीनः यतो हि श्लेषादयो गुणा गूढार्थादयश्च दोषाः पृथक सत्ताकाः सन्ति –

न च वाच्यं गुणो दोषाभाव एव भविष्यति।
गुणाः श्लेषादयो दोषः गूढ़ार्थाद्याः पृथक्कृताः।।[17]

(गः) विश्वकोशात्मकं स्वरूपम् – अस्य पुराणस्य गुणालङ्काररीति भागः केनचिच्छास्त्रीयसिद्धान्तप्रवर्तकेनाचार्येण न विरचितः। एषा रचना प्राधान्येन सङ्लनात्मिका सञ्जाता। अस्य रचयिता विविधान् विषयानेकत्र निधाय विश्वकोशरूपात्तकं कमपि ग्रन्थं रचयितुमैच्छद् अस्मात् तेन कस्यापि सम्प्रदाय विशेषस्य विचारा न प्रतिपादिता न चा चाप्यालोचिताः। केवलं तदनींतनोपलब्धविविधसम्प्रदायानां सिद्धान्तानेवासावग्रहीत् ।

4. गुणानां रीतीनाम् च मध्ये प्रत्यक्षसम्बन्धाभावाः– मम्मटादिसंस्कृत काव्यशास्त्रीयाचार्याणां मतानुसारं सर्वेषु रसेष्विमे गुणा मात्राभेदेनावतिष्ठन्ते। यद्यपि नैतेषु गुणानामावश्यिकी स्थिति

---

16 अग्निपुराणम् 346,1
17 अग्निपुराणम् 346,2

स्थापि गुणै रसानाम मुत्कर्षो वर्धते । अनेनोत्कर्षहेतुनैव तेषां गुणेषु स्वल्पोऽनल्पो वा समावेशो जायते । माधुर्यगुणः सम्भोगविप्रलम्भ शृङ्गारयोः करुणशान्तयोश्च मध्य समाविश्यते। ओजो गुणो वीरबीभत्सरौद्रेषु प्रसादश्च सर्वेषु रसेषु दृश्यते ।[18] रसैरिव रीतिभिः सार्धमपि गुणानां सम्बन्धा इत्यपि तैरङ्गीकृतम् । वैदर्भीगौडीया पाञ्चाल्याख्य प्रमुखतमरीतिनां लक्षणेष्वेव तेषां त्रयाणां कोमलादिवर्णात्मनां गुणानां प्रमुखतमं स्थानं विद्यते ।[19] एवं तैर्गुणानां रीतिभिः सार्ध तादात्म्यसम्बन्धो रसैश्च सार्धमुत्कर्षाधायकहेतुत्वं स्वीकृतम् । परमग्निपुराणकारेण गुणानां रीतिभिः सार्ध न कोऽपि सम्बन्धो मतः। अत्र हि रीतीनां वर्गीकरणम् प्राधान्येन रसानलङ्कारांश्चाश्चित्य विहितम् । एतदर्थं गुणानामाधारो नापेक्षितः। रसप्रसङ्गेषु गुणानां गुणप्रकरणे च रसानां न कोऽपि निर्देशो दृश्यते। एवं रीतिभिरिव रसैरपि सार्धमनेन पुराणेन गुणानां प्रत्यक्षसम्बन्धो नोक्तः।

5. रीतिः– अग्निपुराणस्य 340 तमेऽध्याये 1. पाञ्चाली, 2. गौडीया 3. वैदर्भी 4. लाटीया चेमाश्चतस्रो रीतयः समाख्याताः। भाषणकलायाः सम्यग् ज्ञानार्थं रीतयः प्रोक्ताः।[20] अग्निपुराणे रीतीनाममत्रोक्तैर्गुणैः सार्धं न कोऽपि प्रत्यक्षसम्बन्धः प्रदर्शितः। रीतीनां लक्षणेषु श्लेषादीनां गुणानां मनिवार्यास्थितिर्नोक्ता न चरीतीनां विभाजनं गुणानाश्रित्यय विहितम् । समासानामलङ्काराणाञ्च परिमाणमेवात्र रीति निर्धारर्णस्य प्रमुखतम आधारो निर्धारितः। अग्निपुराणोक्तानि पाञ्चाली प्रभृतिनामानि स्वसम्बन्ध देशविशेषा–नभिसूचयन्ति। रीतिलक्षणानि सर्वविध काव्यविषयकानि इति कथयितुं पार्यते।

---

18 साहित्यदर्पणः 8,2; 7,8

19 साहित्यदर्पणः 9,2–4

20 वाग्विद्यासम्प्रतिज्ञाने रीतिः साऽपि चतुर्विधा। अग्निपुराणम् 340,1

काव्यशास्त्रीयभागस्य सम्प्रदायः

यद्यप्यग्निपुराणकारेण स्वपूर्ववर्तिनां भरतभामहवामनरुद्रटाख्याचार्याणां ग्रन्थेम्यो बहूनि लक्षणान्यवैकल्येन स्वल्पानल्पपरिवर्तनेन वाऽगृह्यन्त तथापि पुराणेऽस्मिन्न कस्यचिदपि सम्प्रदायविशेषस्य सिद्धान्ता अङ्गीकृता न च प्रख्यापिता इति सूक्ष्मविवेचनानन्तरं ज्ञायते।

वस्तुत एतत्पुराणवर्णितः काव्यशास्त्रीयो भागः काञ्चिदपरामविदितां परम्परामनुसरति या खलु बहुषु विचारेषु प्रत्नतरैः सम्प्रदायैः सह न संवदति। अत्र हि काव्यशास्त्रस्य रसालङ्कारदोषगुणरीतिविषयकाः सर्वविधा विचाराः प्रकटिताः। बहुषु स्थलेष्वनेकानि मतानि पूर्ववर्तिनामाचार्याणां कृतिभ्योऽनालोचनात्मक विधिना सङ्गृहीतानि। परमत्रोपलभ्यामानाः केचन विचाराः पूर्ववर्तिषु ग्रन्थेषु नोपलभ्यन्ते। एतेन खलु पुराणस्यास्यानधिगत स्वरूपेण केनचिदपरेण सम्प्रदायेन सहापि सम्बन्ध आसीदित्यनुमीयते।

एतद्विषये सुरेशमोहनभट्टाचार्यमहाभागेन निपुणं विचारितम् इदानीं तद्विचारान् समाश्रित्य विभिन्नसम्प्रदायैः सह विद्यमानस्य वैषम्यस्य प्रदर्शनादनन्तरं पुराणस्यास्य सम्प्रदायो विचार्यते।[21]

एतत्पुराणस्य काव्यशास्त्रप्रकरणे नाट्यशास्त्रं निरूपितम्। एवं तेन काव्यशास्त्रस्य प्राधान्यं नाट्यशास्त्रस्य च गौणत्वं प्रतिपादितम्। अग्निपुराणात् पूर्ववर्तिनि कस्मिंश्चिदपि ग्रन्थे काव्यशास्त्रप्रकरणे नाट्यशास्त्रस्य निरूपणं न दृश्यते। भरतनाट्यशास्त्रे नाट्यशास्त्रमेव प्राधान्येन वर्णितं काव्यशास्त्रं तु तत्र सङ्क्षेपेण नाट्याङ्गतया प्रतिपादितम्। यद्यप्यग्निपुराणकारेण नाट्यशास्त्रविषयिकी प्रचुरा सामग्री नाट्यशास्त्रादुपात्ता परं केषुचिद् विशिष्टविचारेष्वत्र नाट्य–शास्त्रेण सह विप्रतिपत्तयोऽपि दृश्यन्ते।

---

21 Suresh Mohan Bhattacharya: Pecularities in the Alankara-Section of the Agnipurana, pp.42-49. Bulletin of the Daccan College Research Institute, Poona, Vol.20; Part-I (1960) [Sushil Kumar De Fellicitation Volume]

नाट्यशास्त्रे दशेमे रूपकभेदाः प्रकीर्तिताः– 1. नाट्कम् 2. सप्रकरणम् 3. अङ्कः 4. व्यायोगः 5. भाणः 6. समवकारः 7. वीथी 8. प्रहसनम् 9. डिमः 10. ईहामृगं च।[22] अग्निपुराणेऽपीमे दशभेदा वर्णिताः[23] परमेतानतिरिच्यान्येऽपि सप्तदशभेदा एवमभिहिताः– 1. त्रोटकम् 2. नाटिका 3. सट्टकम् 4. शिल्पकः 5. कर्णाटका 6. दुर्मल्लिका 7. प्रस्थानम् 8. भणिका 9. भाणी 10. गोष्ठी 11. हल्लीशकम् 12. काव्यम् 13. श्रीगदितम् 14. नाट्यरासकम् 15. रासकम् 16.उल्लाप्यकम् 17. रासकञ्च।[24] नाट्यशास्त्रे केवलं नाटिकैव वर्णिता न तत्रान्येषां भेदानां किमपि वर्णनम्।[25] एवमुपरिनिर्दिष्टा ये षोडशभेदा भरतनाट्यशास्त्रे नोक्तास्तेऽग्निपुराणे कस्माच्चिदपरस्मादविदितस्रोतसो ऽगृह्यन्तेति प्रतीयते। सामान्यमिति विशेषश्चेति नाट्यस्य द्वौ भेदावपि सर्वप्रथममग्निपुराण एव व्यपदिष्टौ।[26] पूर्वरङ्गे नान्द्यादिद्वात्रिंशदङ्गानां निर्देशोऽपि सर्वप्रथममत्र विहितः।[27] कवेस्तद्रचनायाश्च प्रशंसकस्य मञ्चस्य च व्यवस्थापयितु र्नाम नाट्यशास्त्रे स्थापक इति सञ्ज्ञितं परमग्निपुराणे तु तस्य सूत्रधार इति।[28]

अलङ्कारसम्प्रदायस्य प्रधानतमानां भामहोद्भटरुद्टाख्याचार्याणामलङ्कारविषयकै र्विचारैरपि पुराणमिदं न बहु प्रभावितम्। सर्वप्रथमं वामनेनालङ्काराणां शब्दालङ्कारार्थालङ्काराख्यौ द्वौ विभागौ विहितौ। रुद्रटेनाप्यलङ्काराणामिमौ द्वौ वर्गावङ्गीकृत्य वक्रोक्त्याद्यलङ्काराः शब्दालङ्कारेषु वास्तवादयश्चार्थालङ्कारेषु सङ्ख्याताः।[29] अग्निपुराणे शब्दार्थालङ्काराख्यस्तृतीयो वर्गोऽपि

---

22 नाट्यशा. 20,2–3

23 अग्निपु. 338,1–2

24 तत्रैव, 338,2–4

25 नाट्यशा. 20,62–64

26 अग्निपु. 338,4–7

27 तत्रैव 338,8

28 नाट्यशा. 5,164; अग्निपु.338,15

29 काव्यालङ्का. 2,13; 7,9

विद्यते ।[30] परमयमस्मात्पुराणात्पूर्ववर्तिनि कस्मिंश्चिदपि ग्रन्थे विलोकयितुं न शक्यते। एवमेवाग्निपुराणोक्तशब्दालंङ्कारलक्षणमपि पूर्ववर्तिषु ग्रन्थेषु नोपलभ्यते।[31] अग्निपुराणे शब्दालङ्कारस्य नवेमे भेदाः— 1. छाया 2. मुद्रा 3. उक्तिः 4. युक्तिः 5. गुम्फना 6. वाकोवाक्यम् 7. अनुप्रासः 8. चित्रम् 9. दुष्करं च।[32] वामनादिभिः पूर्ववर्तिभिराचौर्यरनुप्रास एव व्याख्यातः चित्रालङ्कारस्तु केवलं रुद्रटेनैव विवेचितम्[33] वामनेनार्थालङ्काराणां सङ्ख्याविषये न किमपि निर्दिष्टम्। रुद्रटेन प्रधाना अर्थालङ्काराश्चत्वार एव मताः।[34] परमग्निपुराणे ऽष्टाविमे

अर्थालङ्काराः— 1. स्वरूपम् 2. सादृश्यम् 3. उत्प्रेक्षा 4. अतिशयः 5: विभावना 6. विरोधः 7. हेतुः 8. समन्च।[35] षट् चात्रैते शब्दार्थालङ्काराः— 1. प्रशस्तिः 2. कान्तिः 3. औचित्यम् 4. सङ्क्षेपः 5. यावदर्थता अर्थव्यक्तिश्च।[36] एते ह्युभयालङ्काराः कस्यचित्पूर्ववर्तिन आचार्यस्य कृतौ नोदिताः।

अग्निपुराणस्य रसनिरूपणमपि नितरामद्भुतम्। अत्र रसनिष्पत्तिविषयिकी नूतनैका कल्पना दृष्टिपथं समायाति। ब्रह्मणोंऽशभूतादहङ्कारात्पूर्वमभिमानः समुत्पन्नोऽस्माच्चाभिमादुत्पन्ना रतिरेव परिपोषमुपेत्य शृङ्गारादिरसरूपतां याति।[37] शृङ्गारादिरसानां स्थायिव्यभिचारिसात्त्विकभावानां च वर्णनेऽत्र प्रायशो नाट्यशास्त्रमेवानुसृतं परं यत्र कुत्रचिदेतेषां सङ्ख्यायां क्रमे लक्षणेषु

---

30 अग्निपु. 345,1

31 ये व्युत्पत्त्यादिना शब्दमलङ्कर्तुमिह क्षमाः ।।
शब्दालङ्कारमाहुस्तान् काव्यमीमांसका विदः ।
अग्निपु. 342,18—19

32 तत्रैव 342, 19—20

33 काव्यालङ्का. 5,1

34 अर्थस्यालङ्कारा वास्तवमौपम्यमतिशयः श्लेषः ।
एषामेव विशेषा अन्ये तु भवन्ति निःशेषाः ।। तत्रैव 7,9

35 अग्निपु. 344,1

36 तत्रैव 345,2

37 तत्रैव 339,1—4

नामसु च व्यतिक्रमो विद्यते। नाट्यशास्त्रप्रोक्तेषु शृङ्गारहास्य–करुणरौद्रवीरभयानकबीभत्साद्भुतसञ्ज्ञेष्वष्टसु रसेष्वग्नि[38]पुराणकारेण शान्तारव्यो नवमो रसोऽपि संयोजितः।[39] पूर्ववर्तिना रुद्रटेनापि स्वाभिमतदशरसेषु शान्तो रसः सङ्ख्यातः।[40] कदाचिदग्निपुराणकारेणैष तस्मादेव गृहीतः। भरतेन नाट्यशास्त्रे त्रयस्त्रिंशद् व्यभिचारिभावाः परिगणिताः परमग्निपुराणे त्वेते त्रिंशत्सङ्ख्याकाः। नाट्यशास्त्रस्य निद्रासुप्तमरणाख्या व्यभिचारिभावा नात्र वर्तन्ते। प्रत्नतमग्रन्थेषु केवलमग्निपुराण एव सात्त्विकभावानां सम्बन्धः साङ्ख्यदर्शनेन सह प्रादर्शि।[41] अग्निपुराणकारेण विभावस्य व्युत्पत्तिनिमित्तं लक्षणं नाट्यशास्त्रादग्राहि ।[42] परमस्यालम्बनोद्दीपनाख्यौ पुराणवर्तिनौ द्वौ भेदौ नाट्यशास्त्रेऽन्यस्मिन् वा पूर्वतरे कस्मिंश्चिद् ग्रन्थे नावलोक्येते। अग्निपुराणस्यानुभावलक्षणं भरतोक्तानुभावलक्षणाद् भिन्नम्।[43] अत्रानुभावस्य चत्वार इमे भेदाः 1.

---

38 नाट्यशा. 6,15

39 शृङ्गारहास्यकरुणा रौद्रवीरभयानकाः ।।
बीभत्साद्भुतशान्ताख्याः स्वभवाश्चतुरो रसाः ।।
अग्निपु. 339,8–9

40 शृङ्गारवीरकरुणा बीभत्सभयानकाद्भुता हास्यः ।
रौद्रः शान्तः प्रेयानिति मन्तव्या रसाः सर्वे ।।
काव्याल. 12,13

41 अष्टौ स्तम्भादयः सत्त्वाद्रजसस्तमसः परम् ।।
अग्निपु, 339,17

42 (क) विभाव्यते हि रत्यादि र्यत्र येन विभाव्यते ।
तत्रैव 339,35
(ख) बहवो ऽर्था विभाव्यन्ते वागङ्गाभिनयाश्रिताः ।
अनेन यस्मात्तेनायं विभाव इति सञ्ज्ञितः ।।
नाट्यशा. 7,4

43 (कः) आरम्भ एव विदुषामनुभाव इति स्मृतः ।
स चानुभूयते चात्र भवत्युत निरुच्यते ।।
अग्निपु.339,45
(खः) वागङ्गाभिनयेनेह यतस्त्वर्थो ऽनुभाव्यते ।
वागङ्गोपाङ्गसंयुक्तस्त्वनुभावस्ततः स्मृतः ।।
नाट्यशा. 7,5

मन आरम्भः 2. वागारम्भः 3. बुद्ध्यारम्भः 4. शरीरारम्भश्च।[44] एतेषामत्र सविस्तरं वर्णनम्। मन आरम्भश्च द्विविधः– 1. पौरुषः 2. स्त्रैणश्च। प्रथमस्य चैतेऽष्टौ भेदाः– 1. शोभा 2. विलासः 3. माधुर्यम् 4. स्थैर्यम् 5. गाम्भीर्यम् 6. लालित्यम् 7. औदार्यम् 8. तेजश्च।[45] द्वितीयस्य चेमे द्वादश विभावाः प्रकीर्तिताः– 1. भावः 2. हावः 3. हेला 4. शोभा 5. कान्तिः 6. दीप्तिः 7. माधुर्यम् 8. शौर्यम् 9. प्रागल्भ्यम् 10. उदारता 11. स्थैर्यम् 12. गम्भीरता च।[46] नाट्यशास्त्रेऽपीमे भेदाः प्रकारान्तरेण वर्णिताः। तत्र हि शोभाप्रभृतयोऽष्टौ पौरुषा अनुभावाः सामान्याभिनयप्रकरणे पौरुषगुणत्वेन निरूपिताः।[47] स्थैर्यगम्भीरता–भ्यामृते पुराणोक्ता अन्ये दशसङ्ख्याका भावादयो नाट्यशास्त्रे स्त्रीणां गुणत्वेन मताः।[48] स्थैर्यगाम्भीर्ये च पौरुषगुणानां मध्ये पठिते।[49]

अपि चाग्निपुराणे द्वादशेमे वागारम्भानुभावाः प्रोक्ताः– 1. आलापः 2. प्रलापः 3. विलापः 4. अनुलापः 5. संलापः 6. अपलापः 7. सन्देशः 8. निर्देशः 9. अतिदेशः 10. अपदेशः 11. अपदेशः 12. व्यपदेशश्च।[50] बुद्ध्यारम्भस्य रीतिवृत्तिप्रवृत्त्याख्यास्त्रयो भेदाः कथिताः।[51] शरीरारम्भानुभावे च नायकनायिकयोश्चेष्टानां समावेशः।[52] नारीपात्राणामत्रेमाः कायिकव्यापारा मताः– 1. लीला 2. विलासः 3. विच्छित्तिः 4. विभ्रमम् 5. किलकिञ्चितम् 6. मोट्टायितम् 7. कुट्टमितम् 8. बिब्बोकः 9. ललितम् 10. विकृतम् 11. क्रीडितम् 12.

---

[44] अग्निपु.339,44
[45] तत्रैव 339,47
[46] तत्रैव 339,49
[47] नाट्यशा.24,31
[48] तत्रैव 24,6
[49] तत्रैव 24,31
[50] अग्निपु. 339,51–54
[51] तत्रैव 339,54
[52] चेष्टाविशेषमप्यङ्गप्रत्यङ्गे कर्म चानयोः ।
शरीरारम्भमिच्छन्ति प्रायः पूर्वोऽबलाश्रयः ।।
अग्निपु. 341,1

केलिश्च।[53] परं भरतेनेमे स्त्रीणां स्वभावजयौवनविकारत्वेन मतास्तत्र तु केलिक्रीडितयो र्नाम्नी न स्तः।[54]

अग्निपुराणस्य शृङ्गारादिरसानां भेदोपभेदवर्णनेऽपि वैलक्षण्यं दृश्यते। अग्निपुराणे हास्यस्य षडिमे भेदाः– 1. स्मितः 2. हसितम् 3. विहसितम् 4. उपहसितम् 5. पापहसितम् 6. अतिहसितं च ।[55] परमस्य रसस्यान्तिमौ पापहसितातिहसिताख्यौ द्वौ भेदौ भरतस्यापहसि– तातिहसितभेदाभ्यां भिन्नौ।[56] पुराणकारमतेनापहसितं शब्दजन्यमति– हसितं च शब्दहीनम्। परं नाट्यशास्त्रोक्ता– पहसितलक्षणे शब्दविषयको न को ऽपि निर्देशः। तत्र तावदपहसित– स्यैव शब्दोपेतत्वमभिहितम्।अन्यच्चाग्निपुराणमतेन क्रोधस्वेदरोमाञ्च– वेपथव एव रौद्ररसस्य जनयितारः।[57] किन्तु पूर्ववर्तिना केनाप्याचार्येणैवं न निर्दिष्टम् । अग्निपुराणोक्तभयानकरसस्य लक्षणमपिपूर्ववति नामाचार्याणां लक्षणाद् भिन्नम्।[58]

अग्निपुराणस्य दोषप्रकरणेऽपि किञ्चिद् वैशिष्ट्यं दृष्टिपथं समायाति। पुराणेऽस्मिन् पूर्वं सर्वे दोषाः सप्तसु विभागेषु विभक्ताः। एषु सन्दिहानाविनीताज्ञाज्ञात्रारव्याश्चत्वारो वक्तृदोषाः पदवाक्याभिधौ द्वौ

---

53 तत्रैव 341,2–3

54 नाट्यशा. 24,12–13

55 अग्निपु. 342,9–11

56 (कः) सशब्दं पापहसितमशब्दमतिहासितम् ।
तत्रैव 342,11

(ख) अस्थानहसितं यत्र साम्रनेत्रं तथैव च ।
उत्कम्पितांसकशिरस्तच्चापहसितं भवेत् ।।
संरब्धसाम्रनेत्रं च विकुष्टस्वरमुद्धतम् ।
करोपगूढपार्श्वं च तच्चातिहसितं भवेत् ।।
नाट्यशा. 6,58–59

57 अग्निपु. 342,13

58 आरम्भेषु भवेद् यत्र वीरमेवानुवर्तते ।
भयानको नाम रसस्तस्य निर्वर्तकं भयम् ।।
तत्रैव 342,15

वाचकद इषौ वाच्यदोषश्च सम्मिलिताः।[59] वाच्यदोषस्यापि व्युत्पाद्यव्युत्पादितपूर्वाख्यौ द्वौ भेदौ प्रोक्तौ।[60] दोषाणामेतादृग्वर्गीकरणं कस्यचिदपि पूर्ववर्तिन आचार्यस्य रचनायां नोपलभ्यते। वामनेन रुद्रटेन चापि वाच्यवाचकदोषा निरूपिताः परं ताभ्यामेतेषां दोषाणां कृते वाच्यवाचकाविति शब्दौ न प्रयुक्तौ। काव्यालङ्कारस्य द्वितीयेऽधिकरणे वामनेनैते दोषाः—पददोषाः पदार्थदोषा वाक्यदोषा वाक्यार्थदोषा इति चतुर्विधसञ्ज्ञया निर्दिष्टाः। रुद्रटेन पदवाक्यार्थाभिधास्त्रिविधा दोषा प्रकीर्तिताः।[61] अग्निपुराणस्य साधारणप्रातिस्विकाख्यौ द्वौ वाच्यभेदावपि केनचित्पूर्ववर्तिनाऽऽचार्येण न व्यपदिष्टौ।[62] अपरञ्चाग्निपुराणे केचिदेवंविधा अप्यर्थदोषा ये पूर्ववर्तिभिराचार्यैः पदस्य वाक्यस्य वा कथिताः। विसन्ध्याख्यो ऽर्थदोष एतादृश एव।[63] अप्रयुक्तत्वसंशयितार्थते अग्निपुराणे पददोषान्तर्गते विद्येते परं वामनेनैते वाक्यार्थदोषेषु मते।[64] अग्निपुराणवर्णिताः क्रियाभ्रंशका रकभ्रंशव्यस्तसम्बन्धिताछान्दसत्वाविस्पष्टत्वविपर्य स्तार्थ—ताख्या दोषा अपि पूर्ववर्तिषु ग्रन्थेषु नोदिताः।

अग्निपुराणस्य गुणानां वर्णनमपि पुरातनपरम्परया सार्धं न सङ्गच्छते। यद्यपि अलङ्कारसम्प्रदायस्य पूर्ववर्तिभिराचार्यैरिवाग्नि—पुराणकारेणापि गुणालङ्कारमध्ये न कोऽपि विशेषः प्रोक्तः परं तेनोभयोरेव काव्यशोभाधायकत्वं प्रोच्य समानं महत्त्वं प्रतिपादितम्।[65] अत्र विद्यमानं गुणानां वर्गीकरणमपि पूर्ववर्तिनामाचार्याणां वर्गीकरणात् सर्वथा भिन्नम् । सामान्यवैशेषिकाख्यौ गुणानां द्वौ भेदावग्नि—पुराणात्पूर्ववर्त्तिरचनासु न विद्येते।

---

59 तत्रैव 347,1—3

60 तत्रैव 347,21

61 काव्यालङ्का. 6,1; 12.1

62 अग्निपु. 347,13

63 तत्रैव 347,15 काव्याल. सू.वृ. 2,2,7 काव्यालङ्का. 6,14

64 अग्निपु.347,5;9, काव्याल.सू.वृ.2,2,20—21

65 (कः) यः काव्ये महतीं छायामनुगृह्णात्यसौ गुणः ।
अग्निपु.346,3
(खः) काव्यशोभाकरान् धर्मानलङ्कारान् प्रचक्षते ।। तत्रैव 342,17

अग्निपुराणे गुणानां त्रयो भेदा वर्णिताः– 1. शब्दगुणाः 2. अर्थगुणाः 3. उभयार्थगुणाश्च। नाट्यशास्त्रे काव्यादर्शे च गुणानां दशभेदास्तु प्रोक्ताः परं न ते तत्र केनचिच्छब्दादि वर्गविशेषेण सह सम्बद्धाः ।[66] वामनेन भरतदण्डिसम्मता दशेमे गुणाः सङ्ख्याताः – 1. ओजः 2. प्रसादः 3. श्लेषः 4. समता 5. समाधिः 6. माधुर्यम् 7. सौकुमार्यम् 8. उदारता 9. अर्थव्यक्तिः 10. कान्तिश्च।[67] परमिमे गुणास्तेन शब्दार्थनिष्ठा मताः। एवं तन्मतेनैतेषां सङ्ख्या विंशति–र्जायते। अग्निपुराणकारेणैकोनविंशतिर्गुणा मताः।[68] तेषु सप्तेमे शब्दगुणाः– 1. श्लेषः 2. लालित्यम् 3. गाम्भीर्यम् 4. सौकुमार्यम् 5. उदारता 6. सती 7. यौगिकी च।[69] एतेषु शब्दगुणेषु श्लेषसौकुमार्योदारताख्यास्त्रय गुणा एव पूर्ववर्तिग्रन्थेष्वलोक्यन्ते। अन्ये लालित्यादयश्चत्वारो गुणा अपरस्मात्कस्माच्चिदविदितस्रोतसोऽगृह्–यन्तेति प्रतीयते। अत्र षडिमेऽर्थगुणाः– 1. माधुर्यम् 2. संविधानम् 3. कोमलत्वम् 4. उदारता 5. प्रौढिः 6. सामयिकत्वं च।[70] माधुर्योदारते अतिरिच्यान्ये संविधानादयोऽर्थगुणा अपि नूतना एव। एवमेवात्र षडेत उभयगुणाः– 1. प्रसादः 2. सौभाग्यम् 3. यथासङ्ख्यम् 4. प्रशस्यता 5. पाकः 6. रागश्च।[71] प्रशस्यताया रागस्य च नाम्नी पूर्ववार्तेरचनासु न दृदूयेते।

अग्निपुराणोक्ता रीतयोऽपि पूर्ववर्तिनि रीतिसम्प्रदाये वर्णिताभ्यो रीतिभ्यो विसंवदन्ति। दण्डिना द्वावेव मार्गौ (रीती) प्राधान्येन निर्दिष्टौ– 1. वैदर्भः 2. गौडीयश्च।[72] वामनेन वैदर्भी गौडीयापा–

---

66 नाट्यशा. 17,96; काव्याद. 1.41

67 काव्याल.सू.वृ. 3,2,4

68 त एवार्थगुणा । तत्रैव 2,2,1

69 अग्निपु. 346,5–6

70 अग्निपु. 346,12

71 अग्निपु. 346,18–19

72 अस्त्यनेको गिरां मार्गः सूक्ष्मभेदः परस्परम् ।
तत्र वैदर्भगौडीयौ वर्ण्येते प्रस्फुटान्तरौ ।।
काव्याद. 1,40

ञ्चाल्यारव्यास्तिस्रो रीतयो मताः।[73] रुद्रटेनेमाश्चतस्रोरीतयः प्रकीर्तिताः– 1. पाञ्चाली 2. लाटीया 3. गौडीया 4. वैदर्भी च।[74] अग्निपुराणेऽपि पाञ्चाली, गौडदेशीया, वैदर्भी लाटजा चेति चतसृणां रीतीनां प्रतिपादनम्।[75] रुद्रटेनेमरीतयः समासानां न्यूनत्वप्राचुर्याभावभेदानवम्ब्य विभक्ताः परमग्निपुराणकारेण तावदिमा अलङ्काराणां मृदुपरुषवर्णानां च परिमाणभेदमाश्रित्य निरूपिताः।[76] अग्निपुराणस्य वृत्तीनां वर्णनमपि नाट्यशास्त्रोक्तवृत्तिभ्यो भिन्नम्। एतस्मिन् पुराणे चत्स्रा इमा वृत्तयः– 1. भारती 2. आरभटी 3. कौशिकी 4. सात्वती च।[77] नाट्यशास्त्रेऽप्येत एव भेदाः।[78] परमग्निपुराणस्य भारतीवृत्त्या लक्षणं नाट्यशास्त्रोक्तलक्षणाद् भिन्नतरम् । अग्निपुराणे भारतीवृत्तिरेवं प्रोक्ता –

वाक्प्रधाना नरप्राया स्त्रीयुक्ता प्राकृतोक्तिका।
भरतेन प्रणीतत्वाद् भारती रीतिरुच्यते।।[79]

एवमत्र पात्राणां कथोपकथनस्य प्राधान्यं पुरुषपात्राणां बाहुल्यं स्त्रीपात्राणामपि ग्रहणं प्राकृतभाषायाश्च प्रयोगो निर्धारितः। नाट्यशास्त्रोक्तलक्षणेऽपि संवादानां प्राधान्यं पुरुषाणां प्रयोज्यत्वं च प्रोक्ते परं तत्र स्त्रीपात्राणां निषेधस्य संस्कृतवाक्यानामेव प्रयोगस्य च विधानं विहितम्।[80] अग्निपुराणनाट्यशास्त्रयो र्वीथीभेदा अपि परस्परं विसंवदन्ति। अग्निपुराणे वीथ्या इमे भेदाः– 1. उद्घातकम्

---

73 काव्याल.सू.वृ. 1,2,9

74 काव्यालङ्का. 2,4–6

75 अग्निपु. 340,1

76 तत्रैव 340,2–4

77 तत्रैव 340,5

78 नाट्यशा. 22,11–14

79 अग्निपु. 340,6

80 या वाक्प्रधाना पुरुषप्रयोज्या
स्त्रीवर्जिता संस्कृतवाक्ययुक्ता ।
स्वनामधेयै र्भरतैः प्रयुक्ता
सा भारती नाम भवेत्तु वृत्तिः ।।
नाट्यशा. 22,25

2. लपितम् 3. असत्प्रलापः 4. वाक्श्रेणी 5. नालिका 6. विपणम् 7. व्यवहारः 8. त्रिमतम् 9. छलम् 10. अवस्कन्दितम् 11. गण्डः 12. मृदवः 13. उचितं च।[81] नाट्यशास्त्रे चैते भेदा एवंविधाः– 1. उद्घात्यकम् 2. अवलगितम् 3. अवस्यन्दितम् 4. असत्प्रलापः 5. प्रपञ्चः 6. नालिका 7. वाक्केलिः 8. अधिबलम् 9. छलम् 10. व्याहारः 11. मृदवम् 12. त्रिगतम् 13. गण्डञ्च।[82] अग्निपुराणोक्तभेदेषु न केवलं क्रमे विपर्ययो दृश्यते प्रत्युत नाट्यशास्त्रस्य प्रपञ्चवाक्केल्यधिबलानां स्थानेऽञ्चितवाग्वेणीविपणानां नामान्यपि प्रयुक्तानि। त्रिगतस्य च स्थाने त्रिमतमिति भणितम्। अपि चात्र भरतेनेमे भेदा वीथ्याख्यनाटकभेदस्य प्रसङ्गतो व्याख्याताः परमग्निपुराणे त्वैते भारतीवृत्तिप्रकरणे परिगणिताः। वीथी चात्र भारतीवृत्तेरङ्गत्वेन निरूपिता।

अपरञ्चानुप्रासप्रसङ्गे पुराणवर्णिताः कर्णाटी, कौन्तली, कौन्ती, कोङ्कणी, वामनासिका, द्रावणी, माधवी चेति सप्त वृत्तयः पूर्ववर्तिनामाचार्याणां ग्रन्थेषु नोक्ताः। दोषप्रकरणस्य कविसमयवर्णनमपि पुरातनकृतिषु नोपलभ्यते।

एतेन खल्वस्याग्निपुराणस्य केनचिदविदितेनापरेण सम्प्रदायेन सहापि सम्बन्ध आसीदिति प्रतीयते। तस्मिंश्च सम्प्रदाये भरतभामहवामनाद्याचार्याणां प्रतिपादितेभ्यो विचारेभ्यो भिन्नतरा विचारा अप्यासन्। वस्तुतः पुराणमिदं कमपि सम्प्रदायविशेषं सर्वथा नानुसरति। कतिपये विचारा अत्र भरतादीनां ग्रन्थेम्यो गृहीताः कतिचिच्चास्या अविदिताया विशिष्टाया परम्परायाः सङ्कलिताः। अस्मिन् पुराणे सर्वत्र सङ्कलनात्मकप्रवृत्तिदर्शनादेतादृशा नूतना अद्भुता वा विचारा अग्निपुराणकारस्यैव सन्तीति स्वीकर्तुं मनो विचिकित्सति। वस्तुतोऽस्मिन् पुराणे बहूनां सम्प्रदायानां विविधविचाराणां समन्वयात्मकः सङ्ग्रहः।

---

[81] अग्निपु. 340,8–9

[82] नाट्यशा. 20,118–119

एवं पुराणेऽस्मिन्नेकतो भरतभामहवामनादिप्रतिभा दितसम्प्रदायानामनुवर्तनमपरतः कस्यचिदपरस्य सम्प्रदायविशेषस्याप्यनु-सरणं दृश्यते। यद्यप्यत्र वर्णितेषु विचारेषु विदिताविदितानामुभय–विधानामेव सम्प्रदायानां सङ्करो जातस्तथाप्यत्र वैलक्षण्यबाहुल्यादज्ञातेन केनचित्सम्प्रदायविशेषेण सहापि सम्बन्ध–विशेष आसीदिति स्फुटं प्रतिभाति। अस्मादस्य पुराणस्य सम्प्रदायो भरतभामहवामनादीनां सम्प्रदायेभ्यो यत्रकुत्रचिद् वैलक्षण्यमपि निषेवते।

## अनुशीलितग्रन्थसूची


| | |
|---|---|
| अग्निपुराणम् | आनन्दाश्रम सीरीज़, पूना, संवत् 1991 |
| अग्निपुराण का काव्य शास्त्रीय भाग | रामलाल वर्मा, नेशनल पब्लिशिंग हाउस, दरियागंज, दिल्ली, 1959 ई. |
| अष्टाध्यायी पाणिनि | क्षेमराज श्रीकृष्णदास मुम्बई |
| काशिका | वामन जयादित्य चौखम्बा संस्कृत सीरीज़ आफिस वाराणसी |
| गरुडपुराण | जीवानन्द विद्यासागर कलकत्ता |
| नारदीयपुराणम् | क्षेमराज श्रीकृष्णदास मुम्बई |
| पुराणपर्यालोचनम् | श्रीकृष्णमणि त्रिपाठी चौखम्बा सूरभारती वाराणसी |
| भागवतपुराणम् | गीताप्रेस गोरखपुर |
| भागवत्पुराणम् | श्रीधरीटीकोपेतम् गंगाविष्णु श्रीकृष्णदास मुम्बई |
| मार्कण्डेय पुराणम् | क्षेमराज श्रीकृष्णदास मुम्बई |
| विष्णुधर्मोत्तरपुराणम् | मधुसूदन शर्मा माधवप्रसाद क्षेमराज श्रीकृष्णदास मुम्बई |

| | |
|---|---|
| विष्णुपुराणम् | मुनिलाल गुप्त गीताप्रेस गोरखपुर |
| सिद्धान्तकौमुदी | भट्टोजिदीक्षित मीरघाट वाराणसी |
| Agnipuranam | M.M Dutt English Translation Calcutta |
| Ancient Indian Historical Tradition | F.E. Pargiter Oxford University Press London |
| Concepts of Riti and Guna | P.C. Lohiri University of Dacca |
| Vishnupurana | H.H. Wilson Oxford University London |

**Periodicals and Journals**

| | |
|---|---|
| Annuals of Bhandarkar Oriental Research Institute Poona. | Pune |
| Puranam | V.S. Agarwal Basant Panchani Number 1960, Varanasi |

कोशग्रन्था

| | |
|---|---|
| पद्मचन्द्रकोशः | मेहरचन्दलछमणदास लाहौर |
| संस्कृतशब्दार्थकौस्तुभः | द्वारकाप्रसाद चतुर्वेदी इलाहाबाद |
| हलायुकोशः | जयशंकरजोशी उत्तरप्रदेश शासन लखनऊ |

# V. V. RESEARCH INSTITUTE

## SOME SELECT PUBLICATIONS

1. A Vedic Word-Concordance (वैदिकपदानुक्रम-कोषः) in 5 Sections Containing 16 Parts Ed. by Ācharya Vishva Bandhu.
2. Ṛgveda (ऋग्वेदः) with Commentaries of Skandasvāmin, Udgītha, Venkaṭa-Mādhava and Mudgala in 8 volumes edited by Ācharya Vishva Bandhu.
3. Atharvaveda (Śaunaka) अथर्ववेदः (शौनकीयः) with the Padapātha and Sāyaṇacārya's Commentary in 5 volumes, edited by Ācharya Vishva Bandhu.
4. ब्राह्मणोद्धार-कोषः (Brāhmaṇic Citations) edited by Ācharya Vishva Bandhu.
5. Vedic Textuo-linguistic Studies—Ācharya Vishva Bandhu.
6. Mahā-Subhāṣita-Saṁgraha, Vols. I to VII—Comp. Dr. Ludwik Sternbach, Ed. by S. B. Nair.
7. Ārṣeyakalpa with the Commentary of Varadarāja —Cr. ed. Dr. B. R. Sharma.
8. Śāṅkhāyana-Āraṇyaka–Cr. Ed. Pandit Bhim Dev.
9. The Ṛgveda—Ram Gopal.
10. Kalpa-Sūtra (कल्पसूत्र-वैदिक वाङ्मय का बृहद् इतिहास) —Prof. Kundan Lal Sharma.
11. Vedāṅga (वेदाङ्ग-वैदिक वाङ्मय का बृहद् इतिहास)—Prof. Kundan Lal Sharma.
12. यजुर्वेद तथा सामवेद संहिताएं (वैदिक वाङ्मय का बृहद् इतिहास) —Prof. Kundan Lal Sharma.
13. Linguistic History of Uttarākhaṇḍa—Dr. D. D. Sharma.
14. Index of Papers submitted to the All-India Oriental Conference, Vol. IV, Sessions XXIII to XXXI (1966–82) – Dr. K. V. Sarma.

